अच्छा न धीतयः ॥ ५ ॥ प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवया मरुत् । प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ ६ ॥ अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति सयुग्वभिः सूरो न सयुग्वभिः । धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः । विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ७ ॥ अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ८ ॥ अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ ९ ॥ तव त्यं नर्यं नृतोप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् । यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्य देवमोजसा विदेदूर्जं शतक्रतुर्विदेदिषम् ॥ १० ॥

॥ ९ ॥ ऋषिः—१, ४ अमहीयुः । २ मधुच्छन्दाः । ३ भृगुर्वारुणिः । ५ त्रितः । ६ कश्यपः । ७ जमदग्निः । ८ दृढच्युतः आगस्त्यः । ९, १० काश्यपोऽसितः ॥ पवमानो देवता ॥ गायत्री छन्दः ॥ षड्जः स्वरः ॥

॥ ९ ॥ उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रं शर्म महि श्रवः ॥ १ ॥ स्वादिष्ठया मदिष्ठया पवस्व सोमधारया । इन्द्राय पातवे सुतः ॥ २ ॥ वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ॥ ३ ॥ यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशंसहा ॥ ४ ॥ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । हरिरेति कनिक्रदत् ॥ ५ ॥ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥ ६ ॥ असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥ ७ ॥ पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥ ८ ॥ परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा असि ॥ ९ ॥ परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥ १० ॥

॥ १० ॥ ऋषिः—१ कविर्मेधावी । २ श्यावाश्वः । ३ त्रितः । ४, ८ अमहीयुः । ५ भृगुः । ६ कश्यपः । ७ निध्रुविः काश्यपः । ९, १० काश्यपोऽसितः ॥ पवमानो देवता ॥ गायत्री छन्दः ॥ षड्जः स्वरः ॥

॥ १० ॥ प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् । सुता विदथे अक्रमुः ॥ १ ॥ प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः । वनानि महिषा इव ॥ २ ॥ पवस्वेन्दो वृषासुतः कृधी नो यशसो जने । विश्वा अपद्विषो जहि ॥ ३ ॥ वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । पवमान स्वर्दृशम् ॥ ४ ॥ इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः । सृजदश्वं रथीरिव ॥ ५ ॥ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥ ६ ॥ पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः । वायुमारोह धर्मणा ॥ ७ ॥ पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥ ८ ॥ परि स्वानास इन्दवो मदाय बर्हणा गिरा । मधो अर्षन्ति धारय ॥ ९ ॥ परि प्रासिष्यदत्कविः सिन्धोरूर्मावधिश्रितः । कारुं बिभ्रत्पुरुस्पृहम् ॥ १० ॥

इति द्वितीयोर्धः प्रपाठकः पञ्चमश्च

प्रपाठकः समाप्तः

# अथ षष्ठः प्रपाठकः ॥

॥ १ ॥ ऋषिः—१, ८, ९ अमहीयुः । २ बृहन्मतिः आङ्गिरसः । ३ काश्यपोऽसितः । ४ प्रभूवसुः । ५ मेध्यातिथिः । ६, ७ निध्रुवि काश्यपः । १० उचथ्यः ॥ पवमानो देवता ॥ गायत्री छन्दः ॥ षड्जः स्वरः ॥

॥ १ ॥ उपांशु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ १ ॥ पुनानो अक्रमीदभि विश्वामृधोविचर्षणिः । शुम्भन्तिविप्रं धीतिभिः ॥ २ ॥ आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः । इन्दुरिन्द्राय धीयते ॥ ३ ॥ असर्जिरथ्यो यथापवित्रेचम्वोः सुतः । कार्ष्मन्वाजी न्यक्रमीत् ॥ ४ ॥ प्रयद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः । घ्नन्तः कृष्णामपत्वचम् ॥ ५ ॥ अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः । नुदस्वादेवयुञ्जनम् ॥ ६ ॥ अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ ७ ॥ स पवस्व य आविथेन्द्रं वृत्राय हन्तवे । वव्रिवांसं महीरपः ॥ ८ ॥ अया वीती परिस्रव यस्त इन्दोमदेष्वा । अवाहन्नवतीर्नव ॥ ९ ॥ परिद्युक्षं सनद्रयिं भरद्वाजं नो अन्धसा । स्वानो अर्ष पवित्र आ ॥ १० ॥

॥ २ ॥ ऋषिः—१ मेध्यातिथिः । २, ७ भृगुः । ३ उचथ्यः । ४ अवत्सारः । ५, ६ निध्रुविः काश्यपः । ८, ९ काश्यपो मारीचः । १० असितः । ११ कविः । १२ जमदग्निः । १३ अयास्यः आङ्गिरसः । १४ अमहीयुः ॥ पवमानो देवता ॥ गायत्री छन्दः ॥ षड्जः स्वरः ॥

॥ २ ॥ अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सं सूर्येण दिद्युते ॥ १ ॥ आ ते दक्षंमयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ २ ॥ अध्वर्यो अद्रिभिः सुतं सोमं पवित्रे आनय । पुनाहीन्द्राय पातवे ॥ ३ ॥ तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥ ४ ॥ आपवस्व सहस्रिणं रयिं सोम

सुवीर्यम् । अस्मे श्रवांसि धारय ॥५॥ अनुप्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे
जनन्तसूर्यम् ॥ ६ ॥ अर्षासोम द्युमत्तमोऽभिद्रोणानि रोरुवत् । सीदन्योनौ वने-
ष्वा ॥ ७ ॥ वृषा सोमद्युमां असि वृषा देव वृषव्रतः । वृषा धर्माणि दध्रिषे ॥ ८ ॥ इषे
पवस्व धारया मृज्यमानो मनीषिभिः । इन्दो रुचाभिगा इहि ॥ ९ ॥ मन्द्रया सो-
मधारया वृषा पवस्व देवयुः । अव्या वारेभिरस्मयुः ॥ १० ॥ अया सोम सु कृ-
त्यया महान्त्सन्नभ्यवर्द्धथाः । मन्दान इद्वृषायसे ॥ ११ ॥ अयं विचर्षणिर्हितः प-
वमानः स चेतति । हिन्वान आप्यं बृहत् ॥ १२ ॥ प्र न इन्दो महे तु न ऊर्मिं
न बिभ्रदर्षसि । अभिदेवाँ अयास्यः ॥ १३ ॥ अपघ्नन्पवते मृधोऽपसोमो अराव्णः
गच्छन्निन्द्रस्य । निष्कृतम् ॥ १४ ॥

॥ ३ ॥ ऋषिः—१—१२ भरद्वाजः काश्यपो गोतमोऽत्रिर्विश्वामित्रो जम-
दग्निर्वसिष्ठः ॥ पवमानो देवता ॥ बृहती छन्दः ॥ मध्यमः स्वरः ॥

॥ ३ ॥ पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य
सीदस्युत्सो देवो हिरण्ययः ॥ १ ॥ परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वान् यो नर्यो अप्स्व३न्तरा सुषाव सोममद्रिभिः ॥ २ ॥ आ सोम स्वानो
अद्रिभिस्तिरो वाराण्यव्यया । जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे
॥ ३ ॥ प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा । अंशोः पयसा मदिरो न जा-
गृविरच्छाकोशं मधुश्चुतम् ॥ ४ ॥ सोम उष्वाणः सोतृभिरधिष्णुभिरवीनाम् ।
अश्वयेव हरितायाति धारया मन्द्रयायातिधारया ॥५॥ तवा हं सोम रारण सख्य इन्दो
दिवेदिवे । पुरूणि बभ्रो निचरन्ति मामव परिधींरति ताँ इहि ॥६॥ मृज्यमानः सुहस्त्या
समुद्रे वाचमिन्वसि । रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ७ ॥ अभि
सोमास आयवः पवन्ते मद्यं मदम् । समुद्रस्याधिविष्टपे मनीषिणो मत्सरासो म-
दच्युतः ॥ ८ ॥ पुनानः सोमजागृविरव्या वारैः परि प्रियः । त्वं विप्रो अभवो-
ऽङ्गिरस्तम मध्वा यज्ञं मिमिक्षणः ॥ ९ ॥ इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।

सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः ॥ १० ॥ पवस्व वाजसातमोऽभि-
विश्वानि वार्या । त्वं समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः ॥ ११ ॥ पव-
मान असृक्षत पवित्रमतिधारया । मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभिप्र-
यांसि च ॥ १२ ॥

॥ ४ ॥ ऋषिः—१, ९ उशना काव्यः । २ वृषगणो वासिष्ठः । ३, ७ पराशरः शाक्त्यः । ४, ६ वसिष्ठो मैत्रावरुणिः । ५, १० प्रतर्दनः दैवोदासिः । ८ प्रस्कण्वः काण्वः ॥ पवमानो देवता ॥ त्रिष्टुप् छन्दः ॥ धैवतः स्वरः ॥

॥ ४ ॥ प्र तु द्रव परि कोशं निषीद नृभिः पुनानो अभि वाजमर्ष । अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्हिरशनाभिर्नयन्ति ॥ १ ॥ प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति । महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ २ ॥ तिस्रो वाच ईरयति प्रवह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ३ ॥ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् । सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमन्ति होता ॥ ४ ॥ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥ अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशन्त वाणीः । वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि ॥ ६ ॥ अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य गोपाः । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ ७ ॥ कनिक्रन्ति हरिरासृज्यमानः सीदन्वनस्य जठरे पुनानः । नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥ ८ ॥ एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः । सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ९ ॥ पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये । अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः ॥ १० ॥

॥ ५ ॥ ऋषिः—१ प्रतर्दनः । २, १० पराशरः शाक्त्यः । ३ इन्द्र प्रमतिर्वासिष्ठः । ४ वसिष्ठः मैत्रावरुणः । ५ मृडीको वासिष्ठः । ६ नोधाः गौतमः । ७ कण्वो घौरः । ८ मन्युर्वासिष्ठः । ९ कुत्स आङ्गिरसः । ११ कश्यपः मारीचः । १२ प्रस्कण्वः काण्वः ॥ पवमानो देवता ॥ त्रिष्टुप् छन्दः ॥ धैवतः स्वरः ॥

॥ ५ ॥ प्र सेनानीः शूरो अग्ने रथानां गव्यं नेति हर्षते अस्य सेना । भद्रान् कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥ प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम् । पवमान पवसे धाम गोनां जनयन्त सूर्यमपिन्वो अर्कैः ॥ २ ॥ प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय । स्वादुः पवतामतिवारमव्यमासीदतु कलशं देव इन्दुः ॥ ३ ॥ प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिषन्नयासीत् । इन्द्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥ ४ ॥ तक्षद्यदी मनसो वेनतो वाग् ज्येष्ठस्य धर्मं द्युक्षोरनीके । आदीमायन्वरमावावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५ ॥ साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः । हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥ अधि यदस्मिन्वाजिनीव शुभः स्पर्द्धन्ते धियः सूरे न विशः । अपो वृणानः पवते कवीयान्व्रजन्न पशुवर्द्धनाय मन्म ॥ ७ ॥ इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय । हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ८ ॥ अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरसि प्रधन्व । ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ९ ॥ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् । अदधादिन्द्रे पवमान ओजो जनयत्सूर्ये ज्योतिरिन्दुः ॥ १० ॥ असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा । दशस्वसारो अधि सानो अव्ये मृजन्ति वह्निं सदनेष्वच्छ ॥ ११ ॥ अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ । नमस्यन्तीरुपचयन्ति सञ्चाचविशन्त्युशतीरुशन्तम् ॥ १२ ॥

इति प्रथमोऽर्धः प्रपाठकः

॥ ६ ॥ ऋषिः—१ आन्धीगुः श्यावाश्विः । २, ३ ययातिर्नाहुषः । ४ मनुः सांवरणः । ५, ८ अम्बरीष ऋजिश्वानौ । ६, ७ ऋभसूनूकाश्यपौ । ९ प्रजापतिर्वाश्यः ॥ पवमानो देवता ॥ छन्दः—१—६, ८, ९ अनुष्टुप् । ७ बृहती ॥ स्वरः—१—६, ८, ९ गान्धारः । ७ मध्यमः ॥

॥ ६ ॥ पुरोजितीवो अन्धसः सुताय मादयित्नवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥ अयं पूषा रयिर्भगः सोमः पुनानो अर्षति । पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ २ ॥ सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः । पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥ ३ ॥ सोमाः पवन्त इन्दवो ऽस्मभ्यं गातुवित्तमा । मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ४ ॥ अभी नो वाजसातमं रयिमर्ष शतस्पृहम् । इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५ ॥ अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् । वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ ६ ॥ आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौंस्यम् । शुक्रा वियन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥ ७ ॥ परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण । यो देवान्विश्वां इत्परि मदेन सह गच्छति ॥ ८ ॥ प्रसुन्वानायान्धसो मर्तो न वष्ट तद्वचः । अप श्वानमराधसं हतामखं न भृगवः ॥ ९ ॥

॥ ७ ॥ ऋषिः—१—३, ५ कविर्भार्गवः । ४ ऋषिगणः । ६ खिगणः । ७ वेणुर्वैश्वामित्रः । ८ वेनोभार्गवः । ९ भरद्वाजोवसुः । १० वत्सः । ११ अत्रिर्भौमः । १२ पवित्र आङ्गिरसः ॥ पवमानो देवता ॥ जगती छन्दः ॥ निषादः स्वरः ॥

॥ ७ ॥ अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्द्धते । आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥ अचोदसो नो धन्वन्त्विन्दवः प्रस्वानासो बृहद्देवेषु हरयः । वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः ॥ २ ॥ एष प्रकोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः । अभ्यृ३तस्य सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसा च धेनवः ॥ ३ ॥ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न प्रमिनाति सङ्गिरम् । मर्य इव

युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ४ ॥ धर्त्ता दिवः पवते कृत्व्यो
रसो दक्षो देवानामनुमाद्यो नृभिः । हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि
कृणुषे नदीष्वा ॥ ५ ॥ वृषा मतानां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां
दिवः । प्राणा सिन्धूनां कलशां अचिक्रद दिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ६ ॥
त्रिरस्मै सप्तधेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि । चत्वार्यन्या भुवनानि
निर्णिजे चारूणि चक्रे यदृतैरवर्द्धत ॥ ७ ॥ इन्द्राय सोम सुषुतः परिस्रवापामी-
वाभवतु रक्षसा सह । माते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्वि-
न्दवः ॥ ८ ॥ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्र-
दत् । पुनानो वारमत्येष्यव्ययं श्येनो न योनिं घृतवन्तमासदत् ॥ ९ ॥ प्रदेवमच्छा
मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः । बर्हिषदो वचनवन्त ऊधभिः परि-
स्रुतमुस्रिया निर्णिजं धिरे ॥ १० ॥ अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मध्वा-
भ्यञ्जते । सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ११ ॥
पवित्रं ते विततम् ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो
अश्नुते श्रृतास इद्वहन्तः सन्तदाशत ॥ १२ ॥

॥ ८ ॥ ऋषिः—१, ७, ११ अग्निश्चाक्षुषः । २ चक्षुर्मानवः । ३, ४, ९, १० पर्वत नारदौ । ५ त्रितः आप्त्यः । ६ मनुराप्सवः । ८, १२ द्वितो आप्त्यः ॥ इन्द्रो देवता ॥ उष्णिक् छन्दः ॥ ऋषभः स्वरः ॥

॥ ८ ॥ इन्द्रमच्छसुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः
॥ १ ॥ प्र धन्वा सोम जागृविरिन्द्रायेन्दो परिस्रव । द्युमन्तं शुष्ममाभर स्वर्विदम्
॥ २ ॥ सखाय आनिषीदत पुनानाय प्रगायत । शिशुन्न यज्ञैः परिभूषत श्रिये
॥ ३ ॥ तं वः सखायो मदाय पुनानमभिगायत । शिशुन्न हव्यैः स्वदयन्त गूर्त्तिभिः
॥ ४ ॥ प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परिप्रिया भुवदध-
द्विता ॥ ५ ॥ पवस्व देववीतय इन्दो धाराभिरोजसा । आ कलशं मधुमान्त्सोम

नः सदः ॥ ६ ॥ सोमः पुनान ऊर्मिणाव्यं वारं विधावति । अग्रे वाचः पवमानः कनिक्रदत् ॥ ७ ॥ प्र पुनानाय वेधसे सोमाय वच उच्यते । भृतिं न भरा मतिभिर्जुजोषते ॥ ८ ॥ गोमन्न इन्दो अश्वमत्सुतः सुदक्ष धनिव । शुचिं च वर्णमधि गोषु धारय ॥ ९ ॥ अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत । गोभिष्टे वर्णमभि वासयामसि ॥ १० ॥ पवते हर्यतो हरिरति ह्वरांसि रंह्या । अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ११ ॥ परि कोशं मधुश्चुतं सोमः पुनानो अर्षति । अभि वाणीर्ऋषीणां सप्ता नूषत ॥ १२ ॥

॥ ९ ॥ ऋषिः—१ गौरिवीतिः शाक्त्यः । २ ऊर्ध्वसद्मा आङ्गिरसः । ३, ८ ऋजिश्वा भारद्वाजः । ४ कृतयशा आङ्गिरसः । ५ ऋणञ्चयः आङ्गिरसः । ६ शक्तिर्वासिष्ठः । ७ उरुराङ्गिरसः ॥ पवमानो देवता ॥ छन्दः—१–४, ६ ककुप् । ५ यवमध्या गायत्री । ७, ८ प्रगाथः ॥ स्वरः—१–४, ६ ऋषभः । ५ षड्जः । ७, ८ मध्यमः ॥

॥ ९ ॥ पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः । महि द्युक्षतमो मदः ॥ १ ॥ अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् । वि कोशं मध्यमं युव ॥ २ ॥ आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् । वनप्रक्षमुदप्रुतम् ॥ ३ ॥ एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवोदुहम् । विश्वा वसूनि बिभ्रतम् ॥ ४ ॥ स सुन्वे यो वसूनां यो रायामानेता य इळानाम् । सोमो यः सुक्षितीनाम् ॥ ५ ॥ त्वं ह्यांऽङ्ग दैव्यं पवमान जनिमानि द्युमत्तमः । अमृतत्वाय घोषयन् ॥ ६ ॥ एष स्य धारया सुतो व्यावारेभिः पवते मदिन्तमः । क्रीळन्नूर्मिरपामिव ॥ ७ ॥ य उस्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा । अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवारुज ॥ ८ ॥

इति द्वितीयोऽर्द्धः प्रपाठकः

॥ १० ॥ ऋषिः—१ भरद्वाजः । २ वसिष्ठः । ३, ६ वामदेवः । ४ शुनःशेपः । ५ गृत्समदः । ७, ८ अमहीयुः । ९ आत्मा ॥ देवता—१—३ इन्द्रः । ४ वरुणः । ५, ७, ८ पवमानः । ६ विश्वेदेवाः । ९ अन्नः ॥ छन्दः—१ बृहती । २, ९ त्रिष्टुप् । ३, ७, ८ गायत्री । ४, ५ चतुष्पदागायत्री । ६ एकपदागायत्री ॥ स्वरः—१ मध्यमः । २, ९ धैवतः । ३—८ षड्जः ॥

॥ १० ॥ इन्द्र ज्येष्ठं न आभर ओजिष्ठं पुपुरि श्रवः । यद्दिधृक्षेम वज्रहस्त रोदसी उभे सुशिप्र पप्राः ॥ १ ॥ इन्द्रो राजा जगतश्चर्षणीनामधिक्षमि विश्वरूपं यदस्य । ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥ २ ॥ यस्येदमा रजोयुजस्तुजे जने वनं स्वः । इन्द्रस्य रन्त्यं बृहत् ॥ ३ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथादित्य व्रते वयन्तवानागसो अदितये स्याम ॥ ४ ॥ त्वया वयम्पवमानेन सोम भरे कृतं विचिनुयाम शश्वत् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५ ॥ इमं वृषणङ्कृणुतैकमिन्माम् ॥ ६ ॥ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्परिस्रवः ॥ ७ ॥ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ ८ ॥ अहमस्मि प्रथमजा ऋतस्य पूर्वंदेवेभ्यो अमृतस्य नाम । यो मा ददाति स इदेव माव दहमन्नमन्नमदन्तमद्मि ॥ ९ ॥

॥ ११ ॥ ऋषिः—१ श्रुतकक्षः । २ पवित्रः । ३, ४ मधुच्छन्दा वैश्वामित्रः । ५ प्रथः । ६ गृत्समदः । ७ नृमेध पुरुमेधौ ॥ देवता—१, ३, ४, ७ इन्द्रः । २ पवमानः । ५ विश्वेदेवाः । ६ वायुः ॥ छन्दः—१, ३, ४, ६ गायत्री । २ जगती । ५ त्रिष्टुप् । ७ अनुष्टुप् ॥ स्वरः—१, ३, ४, ६ षड्जः । २ निषादः । ५ धैवतः । ७ गान्धारः ॥

॥ ११ ॥ त्वमेतदधारयः कृष्णासु रोहिणीषु च । परुष्णीषु रुशत्पयः ॥१॥ अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः । मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ २ ॥ इन्द्र इद्धर्योः सचा सम्मिश्ल

वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥ ३ ॥ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ॥ ४ ॥ प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हवि-
र्यत् । धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमाजभारावसिष्ठः ॥ ५ ॥ नियुत्वा-
न्वायवागह्ययं शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥ ६ ॥ यज्जायथा अपूर्व्य
मघवन् वृत्रहत्याय तत् पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ ७ ॥

॥ १२ ॥ ऋषिः—१, ५, ७, १० वामदेवः । २, ३ गौतमः । ४ मधुच्छन्दा । ६ गृत्समदः । ८, ९ भरद्वाजो बार्हस्पत्यः । ११ हिरण्यस्तूपः । १२, १३ विश्वामित्रः ॥ देवता—१ प्रजापतिः । २, ३ पवमानः । ४–६, १३ अग्निः । ७ रात्रिः । ८ वैश्वानरः । ९ विश्वेदेवाः । १० लिङ्गोक्त । ११ इन्द्रः । १२ सर्वात्मा ॥ छन्दः—१, ७ अनुष्टुप् । २, ३, ५, ६, ९, ११–१३ त्रिष्टुप् । ४ गायत्री । ८ जगती । १० महापङ्क्तिः ॥ स्वरः—१, ७ गान्धारः । २, ३, ५, ६, ९, ११–१३ धैवतः । ४ षड्जः । ८ निषादः । १० पञ्चमः ॥

॥ १२ ॥ मयि वर्चो अथो यशो थो यज्ञस्य यत्पयः । परमेष्ठी प्रजापतिर्दिवि
द्यामिव दृंहतु ॥ १ ॥ सन्ते पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ २ ॥ त्वमिमा ओ-
षधीः सोम विश्वास्त्वमपो अजनयस्त्वङ्गाः । त्वमातनोरुर्वा३न्तरिक्षन्त्वञ्ज्यो-
तिषा वि तमो ववर्थ ॥ ३ ॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं
रत्नधातमम् ॥ ४ ॥ ते मन्वत प्रथमन्नाम गोनान्त्रिः सप्त परमन्नाम जानन् । ता
जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥ ५ ॥ समन्या यन्त्युपय-
न्त्यन्याः समानमूर्वन्नद्यस्पृणन्ति । तमूशुचिं शुचयो दीदिवांसमपान्नपातमुपय-
न्त्यापः ॥ ६ ॥ आप्रागाद्भद्रा युवतिरह्नः केतून्त्समीर्त्सति । अभूद्भद्रा निवेशनी
विश्वस्य जगतो रात्री ॥ ७ ॥ प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा
जातवेदसे । वैश्वानराय मतिन्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ ८ ॥
विश्वेदेवा मम शृण्वन्तु यज्ञमुभे रोदसी अपान्नपाच्च मन्म । मा वो वचांसि

परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥ ९ ॥ यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती । यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् । यशस्व्य३ःस्याः संसदोहम् प्रवदिता स्याम् ॥ १० ॥ इन्द्रस्य नु वीर्य्याणि प्रवोचं यानि चकार प्रथमानि वज्री । अहन्नहिमन्वपस्ततर्द प्रवक्षणा अभिनत् पर्वतानाम् । ॥ ११ ॥ अग्निरस्मि जन्मना जातवेदा घृतम्मे चक्षुरमृतम्म आसन् । त्रिधातुरर्को रजसो विमानोऽजस्रञ्ज्योतिर्हविरस्मि सर्वम् ॥ १२ ॥ पात्यग्निर्विपो अग्रम्पदं वेः पाति यह्वश्चरणं सूर्य्यस्य । पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ १३ ॥

॥ १३ ॥ ऋषिः—१, २, ८—१२ वामदेवः । ३—७ नारायणः ॥ देवता—१ अग्निः । २ ऋतुः । ३—६ पुरुषः । ७ स्रष्टा । ८ द्यावापृथिवी । ९, ११ इन्द्रः । १० आत्मा । १२ गौः ॥ छन्दः—१, २ पङ्क्तिः । ३—७, ९, १० अनुष्टुप् । ८, ११, १२ त्रिष्टुप् ॥ स्वरः—१, २ पञ्चमः । ३—७, ९, १० गान्धारः । ८, ११, १२ धैवतः ॥

॥ १३ ॥ भ्राजन्त्यग्ने समिधान दीदिवो जिह्वा चरत्यन्तरासनि । स त्वन्नो अग्ने पयसा वसुविद्रयिं वर्चो दृशे दाः ॥ १ ॥ वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः । वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः ॥ २ ॥ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३ ॥ त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत्पुनः । तथा विष्वङ्व्यक्रामदशनानशने अभि ॥ ४ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ ५ ॥ तावानस्य महिमाततो ज्यायांश्चपूरुषः । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६ ॥ ततोविराडजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ७ ॥ मन्ये वान्द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभियोजनम् । द्यावापृथिवी भवतं स्योने ते नो मुञ्चत मंहसः ॥ ८ ॥ हरी त इन्द्र श्मश्रूण्युतो ते हरितौ हरी । तन्त्वा स्तुवन्ति कवयः पुरुषासो वन-

गवः ॥ ९ ॥ यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत । सत्यस्य ब्रह्मणो वर्चस्तेन
मा संसृजामसि ॥ १० ॥ सहस्तन्न इन्द्रदद्ध्योज ईशे ह्यस्य महतो विरप्शिन् ।
क्रतुन्न नृम्णं स्थविरञ्च वाजं वृत्रेषु शत्रून्त्सहना कृधी नः ॥ ११ ॥ सहर्षभाः
सहवत्साउदेत विश्वा रूपाणि बिभ्रतीर्द्व्यूध्नीः । उरुःपृथुरयंवो अस्तुलोक इमा
आपस्सुप्रपाणा इहस्त ॥ १२ ॥

॥ १४ ॥ ऋषिः—१ वैखानसः । विभ्राड् सूर्यपुत्रः । ३ कुत्सः । ४–६ सार्पराज्ञी । ७–१४ प्रस्कण्वः काण्वः ॥ देवता—१ अग्निः पवमानः । २–१४ सूर्यः ॥ छन्दः—२ जगती । ३ त्रिष्टुप् । १, ४–१४ गायत्री ॥ स्वरः—२ निषादः । ३ धैवतः । १, ४–१४ षड्जः ॥

॥ १४ ॥ अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छु-
नाम् ॥ १ ॥ विभ्राड् बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजू
तो यो अभिरक्षतित्मना प्रजाः पिपर्त्ति बहुधा विराजति ॥ २ ॥ चित्रंदेवाना-
मुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य
आत्मा जगतस्तस्थुषश्च ॥ ३ ॥ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च
प्रयन्त्स्वः ॥ ४ ॥ अन्तश्चरति रोचनास्यप्राणादपानती । व्यख्यन्महिषो दिवम्
॥ ५ ॥ त्रिंशद्धाम विराजति वाक् पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ६ ॥
अपत्यंतायवो यथा नक्षत्रायन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ ७ ॥ अदृश्रन्नस्य
केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ ८ ॥ तरणिर्विश्वदर्शतो
ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॥ ९ ॥ प्रत्यङ् देवानां विशः
प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ॥ १० ॥ येना पावक चक्षसा भुर-
ण्यन्तञ्जनाँ अनु । त्वं वरुण पश्यसि ॥ ११ ॥ उद्यामेषि रजः पृथ्वहामिमानो
अक्तुभिः । पश्यञ्जन्मानि सूर्य ॥ १२ ॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य

नप्त्यूः । ताभिर्याति स्वयुक्तिभिः ॥ १३ ॥ सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ १४ ॥

इति तृतीयोर्धः प्रपाठकः षष्ठश्च

प्रपाठकः समाप्तः

सामवेद संहितायां पूर्वार्चिकः समाप्तः



# अथ महानाम्न्यार्चिकः

विदा मघवन् विदा गातुमनुशंसिषो दिशः* । शिक्षा शचीनाम्पते पूर्वीणाम्पुरूवसो ॥ १ ॥ आभिष्ट्वमभिष्टिभिः† स्वाऽ३र्न्नांशुः । प्रचेतन प्रचेतये ‡ न्द्रद्युम्नाय न इषे ॥ २ ॥ एवा हि शक्रो + राये वाजाय वज्रिवः । शविष्ठ वज्रिन्नृञ्जसे मंहिष्ठ वज्रिन्नृञ्जस × आयाहि पिब मत्स्व ÷ ॥ ३ ॥

विदा राये सुवीर्य्यम्भवो वाजानाम्पतिर्वशाँ अनु । मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥ यो मंहिष्ठो मघोनामंशुर्न्न शोचिः । चिकित्वो अभि नो नयेन्द्रो विदे तमुस्तुहि ॥ ५ ॥ ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम् । स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतम् बृहत् ॥ ६ ॥ ⁑

इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् । स नः स्वर्षदति द्विषः स नः स्वर्षदति द्विषः ॥ ७ ॥ पूर्वस्य यत्ते अद्रिवोऽंशुर्म्मदाय । सुम्न आधेहि नो वसो पूर्त्तिः शविष्ठ शस्यते ॥ वशी हि शक्रो नूनंतन्नव्यंसन्न्यसे ॥ ८ ॥ प्रभो जनस्य वृत्रहन्त्समर्य्येषु ब्रवावहै । शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥ ९ ॥ ⁂

एवाह्योऽ३ऽ३ऽ३वएवा ह्यग्नेएवाहीन्द्र । एवाहिपूषनएवाहिदेवाः ॥ १० ॥

* द्विपदा--

† "शिक्षा" इत्यत आरभ्यैतत्पर्यन्तं शाक्करभागमाह

‡ एतत्पर्यंतमुपसर्गभागमाह

\+ उभयभागमाह

× शाक्करम् पुनः

÷ पुनरुपसर्गमाह

⁑ अस्मिन् तृचेऽपि पूर्ववत् छन्दोभागविनयोगः ॥

⁂ छन्दोभाग विनयोग

॥ ओ३म् ॥

# सामवेदसंहितायाः

# उत्तरार्चिकः

## प्रथमः प्रपाठकस्य प्रथमोऽर्धः

ऋषिः—१ असितः काश्यपोदेवलो वा । २ कश्यपोमारीचः । ३ वैखानसा आङ्गिरसः । ४ भरद्वाजः । ५ विश्वामित्रोजमदग्निर्वा । ६ इरिमिठः । ७ विश्वामित्रो गाथिनः । ८—१० अमहीयुराङ्गिरसः । ११ वासिष्ठः । १२ वामदेवः । १३ नोधा काक्षीवतः । १४ कलिः प्रगाथः । १५ पुष्कलोऽग्निः । १६ संहितः । १७ शफः । १८ श्यावाश्वः । १९ आन्धीगवः । २० अग्निर्वैश्वानरः । २१ साकमश्वः । २२ सौभरिः । २३ नृमेधः ॥ देवता—१—३, ८—१०, १५—१९ सोमः । ४, २०, २१ अग्निः । ५ मित्रावरुणौ । ६, ११, १३, १४, २२, २३, इन्द्रः । ७ इन्द्राग्नी । १२ सर्वेदेवा ॥ छन्दः—१—८, १२, १५, २१ गायत्री । ९, ११, १३, १४, २० बृहती । १० त्रिष्टुप् । १६, २२, २३ ककुप् । १७ उष्णिक् । १८ अनुष्टुप् । १९ जगती ॥ स्वरः—१—८, १२, १५, २१ षड्जः । ९, ११, १३, १४, २० मध्यमः । १० धैवतः । १६, १७, २२, २३, ऋषभः । १८ गान्धारः । १९ निषादः ॥

उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयुः ॥ सं नः पवस्व शं गवे

शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ १ ॥ दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमः शुक्रा गवाशिरः ॥ हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीदंतो वनुषो यथा ॥ ऋधक्सोम स्वस्तये संजग्मानो दिवाकवे । पवस्व सूर्यो दृशे ॥ २ ॥ पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वंतो न श्रवस्यवः ॥ अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशंत धीतयः ॥ अच्छा समुद्रमिंदवोऽस्तं गावो न धेनवः । अग्मन्नृतस्य योनिमा ॥ ३ ॥ अग्न आयाहि वीतये गृणानो हव्य दातये । नि होता सत्सि बर्हिषि ॥ तं त्वा समिद्भिरंगिरो घृतेन वर्धयामसि । बृहच्छोचायविष्ठ्य ॥ स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥ ४ ॥ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतू ॥ उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥ गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा ॥ ५ ॥ आयाहि सुषुमाहित इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥ ब्रह्माणस्त्वा युजा वयं सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥ ६ ॥ इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतम् ॥ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम् ॥ ७ ॥ उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रं शर्म महि श्रवः ॥ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवो वित्परिस्रव ॥ एना विश्वान्यर्य आद्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ ८ ॥ पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ दुहान ऊधर्दिव्यं मधुप्रियं प्रत्नं सधस्थमासदत् । आ पृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥ ९ ॥ प्र तु द्रव परि कोशं निषीद नृभिः पुनानो अभि वाजमर्ष । अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्हिरशनाभिर्नयन्ति ॥ स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः । पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः

पृथिव्याः ॥ ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन । स चिद्विवेद
निहितं यदासामपीच्यं३ गुह्यं नाम गोनाम् ॥ १० ॥ अभि त्वा शूर नोनुमोऽदुग्धा
इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ न त्वावाँ अन्यो
दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्य-
न्तस्त्वा हवामहे ॥ ११ ॥ कया नश्चित्र आ भुवदूती सदावृधः सखा । कया
शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥ १२ ॥ तं वो दस्ममृ-
तीषहं वसोर्मन्दानमन्धसः । अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ द्युक्षं
सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् । क्षुमन्तं वाजं शतिनं सहस्रिणं
मक्षू गोमन्तमीमहे ॥ १३ ॥ तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये । बृहद्गायन्तः
सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु
शिप्रमन्धसः ॥ य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ १४ ॥
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ रक्षोहा विश्व-
चर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ वरिवोधातमो भुवो मंहिष्ठो
वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ १५ ॥ पवस्व मधुमत्तम इन्द्राय सोम क्रतु-
वित्तमो मदः । महि द्युक्षतमो मदः ॥ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा
स्वर्विदः । स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥ १६ ॥ इन्द्रमच्छ सुता
इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः ॥ अयं भराय सानसिरि-
न्द्राय पवते सुतः । सोमो जैत्रस्य चेतति यथा विदे ॥ अस्येदिन्द्रो मदेष्वा ग्राभं
गृभ्णाति सानसिम् । वज्रं च वृषणं भरत्समप्सुजित् ॥ १७ ॥ पुरोजिती वो
अन्धसः सुताय मादयित्नवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ यो
धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ तं दुरोषमभी नरः
सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥ १८ ॥ अभि प्रियाणि पवते च
नो हितो नामानि यह्वो अधि येषु वर्धते । आ सूर्यस्य बृहतो बृहन्नधि रथं विष्व-
ञ्चमरुहद्विचक्षणः ॥ ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अ-

दाभ्यः । दधाति पुत्रः पित्रोरपीच्यं३नाम तृतीयमधिरोचनं दिवः ॥ अवद्युतानः कलशाँ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये । अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो विराजसि ॥ १९ ॥ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । प्र प्रवयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये । भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥२०॥ एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः ॥ यत्र क्वचते मनो दक्षं दधस उत्तरम् । तत्र योनिं कृणवसे ॥ न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते ॥ अथा दुवो वनवसे ॥ २१ ॥ वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः । वज्रिञ्चित्रं हवामहे ॥ उपत्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् । त्वामिमिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥ २२ ॥ अधाहीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे । उदेव ग्मन्त उदभिः ॥ वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवेदिवे ॥ युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा । इन्द्रवाहा स्वर्विदा ॥ २३ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषि —१, ४ श्रुतकक्षः । २, १४, १५ वसिष्ठः । ३ मेध्यातिथि प्रियमेधौ । ५ इरिमिठः । ६ कुसीदः काण्वः । ७ त्रिशोकः । ८ काण्वः प्रियमेधः । ९ विश्वामित्रः । १० मधुच्छन्दाः । ११ शुनःशेपः । १२ नारदः । १३ वामदेवः । १६ अवत्सारः । १७, १८ असितः काश्यपो अमहीयुर्वा । १९, २१ श्यावाश्वः । २० भरद्वाजादयः सप्तऋषयः । २२ प्रथम मन्त्रस्य श्यावाश्वः, द्वितीय मन्त्रस्य प्रजापतिः, तृतीय मन्त्रस्य अम्बरीषः ॥ देवता—१–१२ इन्द्रः । १३, १६ अग्निः । १४ उषाः । १५ अश्विनौ । १७–२२ सोमः ॥ छन्दः—१–११, १६–१९, २१ गायत्री । १२ उष्णिक् । १३–१५, २० बृहती । २२ प्रथमद्वितीय मन्त्रस्य उष्णिक्, तृतीय मन्त्रस्य अनुष्टुप् ॥ स्वरः—१–११, १६–१९, २१, २२ षड्जः । १२ ऋषभः । १३–१५, २० मध्यमः ॥

पान्तमा वो अन्धस इन्द्रमभि प्रगायत । विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥ पुरुहूतं पुरुष्टुतं गाथान्या३ सनश्रुतम् । इन्द्र इति ब्रवीत न इन्द्र इन्नो

महोनां दाता वाजानां नृतुः । महाँ अभिज्ञ्वायमत् ॥ १ ॥ प्र व इन्द्राय मादनं
हर्यश्वाय गायत । सखायः सोमपाव्ने ॥ शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः ।
चकृमा सत्यराधसे ॥ त्वं न इन्द्रवाजयुस्त्वं गव्युः शतक्रतो । त्वं हिरण्ययुर्वसो
॥ २ ॥ वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः । कण्वा उक्थेभिर्जरन्ते ॥
न घेमन्यदापपन वज्रिन्नपसो नविष्टौ । तवेदु स्तोमैश्चिकेत ॥ इच्छन्ति देवाः
सुन्वन्तं न स्वप्नाय स्पृहयन्ति । यन्ति प्रमादमतन्द्राः ॥ ३ ॥ इन्द्राय मद्वने सुतं
परिष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥ यस्मिन्विश्वा अधिश्रियो रणन्ति
सप्तसंसदः । इन्द्रं सुते हवामहे ॥ त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद्व-
र्द्धन्तु नो गिरः ॥ ४ ॥ अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा-
पिब ॥ शाचिगो शाचिपूजनायं रणायते सुतः । आखण्डल प्रहूयसे ॥ यस्ते
शृङ्गवृषोणपात् प्रणपात् कुण्डपाय्यः । न्यस्मिन् दध्र आ मनः ॥ ५ ॥ आ तू न
इन्द्र द्युमन्तं चित्रं ग्राभं सङ्गृभाय । महा हस्ती दक्षिणेन ॥ विद्मा हि त्वा तुवि-
कूर्मिन्तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥ न हि त्वा शूरदेवा न मर्त्तासो
दित्सन्तम् । भीमं न गां वारयन्ते ॥ ६ ॥ अभि त्वा वृषभासुते सुतं सृजामि
पीतये । तृम्पाव्यश्नुही मदम् ॥ मा त्वा मूरा अविष्यवो मोपहस्वान आदभन् ।
माकीं ब्रह्मद्विषं वनः ॥ इह त्वा गोपरीणसं महे मन्दन्तु राधसे । सरो गौरो
यथा पिब ॥ ७ ॥ इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् । अनाभयिन् ररिमा
ते ॥ नृभिर्धौतः सुतो अश्नैरव्यावारैः परिपूतः । अश्वो न निक्तो नदीषु ॥ तं ते
यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः । इन्द्र त्वास्मिन्त्सधमादे ॥ ८ ॥ इदं
ह्यन्वोजसा सुतं राधानां पते । पिबा त्वाऽ३स्य गिर्वणः ॥ यस्ते अनुस्वधामसत्सु
ते नियच्छ तन्वम् । स त्वा ममत्तु सोम्य ॥ प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा
शिरः । प्र बाहू शूरराधसा ॥ ९ ॥ आ त्वे तानिषीदतेन्द्रमभिप्रगायत । सखाय
स्तोमवाहसः ॥ पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते ॥ स
घानो योग आभुवत्स राये स पुरन्ध्याम् । गमद्वाजेभिरा स नः ॥ १० ॥ योगे योगे

तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ अनु प्रत्नस्यौकसो हुवे तुविप्र-
तिं नरम् । यं ते पूर्वं पिता हुवे ॥ आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ।
वाजेभिरुप नो हवम् ॥ ११ ॥ इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् । विदे
वृधस्य दक्षस्य महांहि षः । स प्रथमे व्योमनि देवानां सदने वृधः । सुपारः सुश्र-
वस्तमः समप्सु जित् ॥ तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम् । भवा नः
सुम्ने अन्तमः सखा वृधे ॥ १२ ॥ एना वो अग्निं नमसोर्जो नपातमाहुवे । प्रियं
चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् । स योजते अरुषा विश्वभोजसा स
दुद्रवत्स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम् ॥ १३ ॥ प्रत्यु
अदर्श्यायत्यू३च्छन्ती दुहिता दिवः । अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृ-
णोति सूनरी ॥ उदुस्रियाः सृजते सूर्यः सचा उद्यं नक्षत्रमर्चिवत् । तवेदुषो व्युषि
सूर्यस्य च संभक्तेन गमेमहि ॥१४॥ इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना । अयं
वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ युवं चित्रं ददथुर्भोजनं नरा चोदे-
थां सूनृतावते । अर्वाग्रथं समनसा नियच्छतं पिबतं सोम्यं मधु ॥ १५ ॥ अस्य
प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ अयं सूर्य इवोपदृगयं
सरांसि धावति । सप्त प्रवत आ दिवम् ॥ अयं विश्वानि तिष्ठति पुनानो भुवनो
परि । सोमो देवो न सूर्यः ॥ १६ ॥ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
हरिः पवित्रे अर्षति ॥ एष प्रत्नेन मन्मना देवो देवेभ्यस्परि । कविर्विप्रेण वा-
वृधे ॥ दुहानः प्रत्नमित्पयः पवित्रे परिषिच्यसे । क्रन्दं देवां अजीजनः ॥ १७ ॥
उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे । पवमान विदा रयिम् ॥ उपो षु जातम-
प्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ उपास्मै गायता नरः पवमा-
नायेन्दवे । अभि देवां इयक्षते ॥ १८ ॥ प्र सोमासो विपश्चितोऽपो नयन्त ऊ-
र्मयः । वनानि महिषा इव ॥ अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।
वाजं गोमन्तमक्षरन् ॥ सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्षन्तु
विष्णवे ॥ १९ ॥ प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा । अंशोः पयसा म-

दिरो न जागृविरच्छाकोशं मधुश्चुतम् ॥ आहर्यतो अर्जुनो अत्के अव्यतप्रियः
सूनुर्न मर्ज्यः । तमीं हिन्वन्त्यपसो यथा रथं नदीष्वागभस्त्योः ॥ २० ॥ प्र सो-
मासो मदच्युतः श्रवसे नो मघोनाम् । सुता विदथे अक्रमुः ॥ आदीं हंसो यथा
गणं विश्वस्यावीवशन्मतिम् । अत्यो न गोभिरज्यते ॥ आदीं त्रितस्य योषणो
हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ २१ ॥ अया पवस्व देवयूरेभन्
पर्येषिविश्वतः । मधोर्धारा असृक्षतः ॥ पवते हर्यतो हरिः रतिह्वरां सिरं
ह्या । अभ्यर्षस्तोतृभ्यो वीर वद्यशः ॥ प्रसुन्वानायान्धसो मर्त्तो न वष्टतद्वचः ।
अपश्वानमराधसं हता मखन्न भृगवः ॥ २१ ॥

इति द्वितीयोऽर्धः प्रपाठकः प्रथमश्च

प्रपाठकः समाप्तः

# अथ द्वितीयः प्रपाठकः

ऋषिः—१ जमदग्निः । २, ५, १५ अमहीयुः । ३ कश्यपः । ४, १० भृगुर्वारुणिर्जमदग्निर्वा । ६, ७ मेधातिथिः काण्वः । ८ मधुच्छन्दावैश्वामित्रः । ९ वसिष्ठः । ११ उपमन्युर्वासिष्ठः । १२ शंयुर्बार्हस्पत्यः । १३ प्रस्कण्वः काण्वः । १४ नृमेधा । १६ नहुषोमानवः । १७ सिकतानिवारीआद्ययोः द्वयोः पृश्नयोऽजाश्चरमस्य । १८ श्रुतकक्षः सुकक्षो वा । १९ जेतामाधुच्छन्दसः ॥ देवता—१—५, १०, ११, १५—१७ पवमानः सोमः । ६ अग्निः । ७ मित्रावरुणौ । ८, १२–१४, १८, १९ इन्द्रः । ९ इन्द्राग्नी ॥ छन्दः—१—१०, १५, १८ गायत्री । ११ त्रिष्टुप् । १२—१४ प्रागाथं । १६, १९ अनुष्टुप् । १७ जगती ॥ स्वरः—१–१०, १५, १८ षड्जः । ११ धैवतः । १२–१४ मध्यमः । १६, १९ गान्धारः । १७ निषादः ॥

पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः । अभि विश्वानि काव्या ॥
त्वं समुद्रिया अपोऽग्रियो वाच ईरयन् । पवस्व विश्वचर्षणे ॥ तुभ्येमा भुवना कवे
महिम्ने सोम तस्थिरे । तुभ्यं धावन्ति धेनवः ॥ १ ॥ पवस्वेन्दो वृषा सुतः कृधी
नो यशसो जने । विश्वा अप द्विषो जहि ॥ यस्य ते सख्ये वयं सासह्याम पृत-
न्यतः । तवेन्दो द्युम्न उत्तमे ॥ या ते भीमान्यायुधा तिग्मानि सन्तिधूर्वणे । र-
क्षा समस्य नो निदः ॥ २ ॥ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा
धर्माणि दध्रिषे ॥ वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा सुतः । स त्वं वृषन्वृषेदसि ॥
अश्वो न चक्रदो वृषा सङ्गा इन्दो समर्वतः । वि नो राये दुरो वृधि ॥ ३ ॥
वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । पवमान स्वर्दृशम् ॥ यदद्भिः परिषि-
च्यसे मर्मृज्यमान आयुभिः । द्रोणे सधस्थमश्नुषे ॥ आ पवस्व सुवीर्यं मन्दमानः
स्वायुध । इहोष्विन्दवागहि ॥ ४ ॥ पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखि-
त्वमावृणीमहे ॥ ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । तेभिर्नः सोम मृळय ॥

स नः पुनान आ भर रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥ ५ ॥ अग्निं
दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ अग्निमग्निं हवीमभिः
सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ अग्ने देवां इहावह जज्ञानो वृक्त-
बर्हिषे । असि होता न ईड्यः ॥ ६ ॥ मित्रं वयं हवामहे वरुणं सोमपीतये । या
जाता पूतदक्षसा ॥ ऋतेन यावृतावृधा ऋतस्य ज्योतिषस्पती । ता मित्रावरुणा
हुवे ॥ वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसः ॥ ७ ॥
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ इन्द्र इद्धर्योः सचा
सम्मिश्ल आ वचो युजा । इन्द्रो वज्री हिरण्ययः ॥ इन्द्र वाजेषु नोऽव सहस्रप्र-
धनेषु च । उग्र उग्राभिरूतिभिः ॥ इन्द्रो दीर्घाय चक्षस आसूर्यं रोहयद्दिवि । वि
गोभिरद्रिमैरयत् ॥ ८ ॥ इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे । धिया धेना अव-
स्यवः ॥ ता हि शश्वन्त ईडत इत्था विप्रास ऊतये । सबाधो वाजसातये ॥ ता
वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवः ॥ ९ ॥ वृषा पवस्व
धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ॥ तं त्वा धर्त्तारमोण्योऽ३ऽ-
पवमानस्वर्दृशम् । हिन्वे वाजेषु वाजिनम् ॥ अया चित्तो विपानया हरिः पवस्व
धारया । युजं वाजेषु चोदय ॥ १० ॥ वृषा शोणो अभि कनिक्रदद्गा नदयन्नेषि
पृथिवीमुत द्याम् । इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् ॥
रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमंशुम् । पवमानः सन्तनिमेषि कृण्व-
न्निन्द्राय सोम परिषिच्यमानः । एवा पवस्व मदिरो मदायोदग्राभस्य नमयं वध-
स्नुम् । परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ॥ ११ ॥
त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिन्नरस्त्वां काष्ठा-
स्वर्वतः ॥ स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः । गामश्वं रथ्य-
मिन्द्र सङ्किर सत्रा वाजं न जिग्युषे ॥ १२ ॥ अभि प्र वः सुराधसमिन्द्रमर्च यथा
विदे । यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ शतानीकेव प्रजिगाति
धृष्णुया हन्ति वृत्राणि दाशुषे । गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभो-

जसः ॥ १३ ॥ त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः । स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ मत्स्वा सुशिप्रिन् हरिवस्तमीमहे त्वया भूषन्ति वेधसः। तव श्रवांस्युपमान्युक्थ्यसुतेष्विन्द्र गिर्वणः ॥ १४ ॥ यस्ते मदो वरेण्यस्तेनाप-वस्वान्धसा । देवावीरघशंसहा ॥ जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे । गोषा-तिरश्वसा असि ॥ सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः । सीदञ्छ्येनो न योनिमा ॥ १५ ॥ अयं पूषा रयिर्भगः सोमः पुनानो अर्षति । पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ समु प्रिया अनूषत गावो मदाय घृष्वयः । सोमासः कृण्वते पथः पवमानास इन्दवः ॥ य ओजिष्ठस्तमाभर पवमान श्रवाय्यम् । यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ १६ ॥ वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः । प्राणा सिन्धूनां कलशां अचिक्रददिन्द्रस्य हार्द्याविशन्म-नीषिभिः ॥ मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परिकोशां असिष्यदत् । त्रि-तस्य नाम जनयन्मधु क्षरन्निन्द्रस्य वायुं सख्याय वर्धयन् ॥ अयं पुनान उषसो अरोचयदयं सिन्धुभ्यो अभवदुलोककृत् । अयं त्रिः सप्त दुदुहान आशिरं सोमो हृदे पवते चारु मत्सरः ॥ १७ ॥ एवाह्यसि वीरयुरेवाशूर उत स्थिरः । एवा ते राध्यं मनः ॥ एवा रातिस्तुविमघ विश्वेभिर्धायि धातृभिः । अधाचिदिन्द्र न सचा ॥ मोषु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते । मत्स्वा सुतस्य गोमतः ॥ १८ ॥ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते । त्वामभि प्र नोनुमो जेतारमपराजितम् ॥ पूर्वीरिन्द्रस्य रातयो न विदस्यन्त्यूतयः । यदा वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥ १९ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ जमदग्निः । २ भृगुर्वारुणिर्जमदग्निर्वा । ३ कविर्भार्गवः । ४ कश्यपः । ५ मेधातिथिः काण्वः । ६, ७ मधुच्छन्दा वैश्वामित्रः । ८ भरद्वाजो बार्हस्पत्यः । ९ सप्तर्षयः । १० पराशरः । ११ पुरुहन्मा । १२ मेध्यातिथिः

काण्वः । १३ वसिष्ठः । १४ त्रितः । १५ ययातिर्नाहुषः । १६ पवित्रः । १७ सोभरिः काण्वः । १८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ । १९ तिरश्चीः ॥ देवता—१—४, ९, १०, १४—१६ पवमानः सोमः । ५, १७ अग्निः । ६ मित्रावरुणौ । ७ मरुतः इन्द्रश्च । ८ इन्द्राग्नी । ११—१३, १८, १९ इन्द्रः ॥ छन्दः—१—८, १४ गायत्री । ९ बृहती सतोबृहती द्विपदा क्रमेण । १० त्रिष्टुप् । ११, १३ प्रगाथं । १२ बृहती । १५, १९ अनुष्टुप् । १६ जगती । १७ ककुप् सतोबृहती च क्रमेण । १८ उष्णिक् ॥ स्वरः—१—८, १४ षड्जः । ९, ११—१३ मध्यमः । १० धैवतः । १५, १९ गान्धारः । १६ निषादः । १७, १८ ऋषभः ॥

एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभिसौभगा ॥ विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः । त्मना कृण्वन्तो अर्वतः ॥ कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् । इडामस्मभ्यं संयतम् ॥ १ ॥ राजा मेधाभिरीयते पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ आ नः सोम सहो जुवो रूपं न वर्चसे भर । सुष्वाणो देववीतये ॥ आ न इन्दो शातग्विनं गवां पोषं स्वश्व्यम् । वहा भगत्तिमूतये ॥ २ ॥ तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः । चारुं सुकृत्यये महे ॥ संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् । शतं पुरो रुरुक्षणिम् ॥ अतस्त्वा रयिरभ्ययद्राजानं सुक्रतो दिवः । सुपर्णो अव्यथी भरत् ॥ अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे । अभिष्टिकृद्विचर्षणिः । विश्वस्मा इत्स्वर्दृशे साधारणं रजस्तुरम् । गोपामृतस्य विर्भरत् ॥ ३ ॥ इषे पवस्व धारया मृज्यमानो मनीषिभिः । इन्दो रुचाभिगा इहि ॥ पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः । हरे सृजान आशिरम् ॥ पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् । द्युतानो वाजिभिर्हितः ॥ ४ ॥ अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ॥ यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृडय ॥ ५ ॥ मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ॥ ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।

ऋतुं बृहन्तमाशाथे ॥ कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अ-
पसम् ॥ ६ ॥ इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ॥
आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ॥ वीळु चिदारुजत्नुभि-
र्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनु ॥ ७ ॥ ता हुवे ययोरिदं पप्ने
विश्वं पुराकृतम् । इन्द्राग्नी न मर्द्धतः ॥ उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
ता नो मृळात ईदृशे ॥ हथो वृत्राण्यार्या हथो दासानि सत्पती । हथो विश्वा
अप द्विषः ॥ ८ ॥ अभि सोमास आयवः पवन्ते मद्यं मदम् । समुद्रस्याधि विष्टपे
मनीषिणो मत्सरासो मदच्युतः ॥ तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं
बृहत् । अर्षा मित्रस्य वरुणस्य धर्मणा प्रहिन्वान ऋतं बृहत् ॥ नृभिर्येमाणो हर्यतो
विचक्षणो राजा देवः समुद्र्यः ॥ ९ ॥ तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं
ब्रह्मणो मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वाव-
शानाः ॥ सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः । सोमः
सुत ऋच्यते पूयमानः सोमे अर्कास्त्रिष्टुभः सन्नवन्ते ॥ एवा नः सोम परिषिच्य-
मान आपवस्व पूयमानः स्वस्ति । इन्द्रमाविश बृहता मदेन वर्द्धया वाचं जनया
पुरन्धिम् ॥ १ ॥ यद्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं
सूर्या अनु न जातमष्ट रोदसी ॥ आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ
शवसा । अस्माँ अव मघवन् गोमति व्रजे वज्रि चित्राभिरूतिभिः ॥ ११ ॥ वयं
घ त्वा सुतावन्त आपो न वृक्तबर्हिषः । पवित्रस्य प्रस्रवणेषु वृत्रहन् परिस्तो-
तार आसते ॥ स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः । कदा सुतं तृषाण
ओक आगमइन्द्र स्वब्दीव वंसगः ॥ कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम् ।
पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥ १२ ॥ तरणिरित्सिषासति वाजं
पुरन्ध्या युजा । आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वम् ॥ न दुष्टुतिर्द्र-
विणोदेषु शस्यते न स्रेधन्तं रयिर्नशत् । सुशक्तिरिन्मघवन् तुभ्यं मावते देष्णं
यत्पार्ये दिवि ॥ १३ ॥ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । हरिरेति

कनिक्रदत् ॥ अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः । मर्जयन्तीर्दिवः शिशुम् ॥
रायः समुद्रांश्चतुरोऽस्मभ्यं सोम विश्वतः । आपवस्व सहस्रिणः ॥ १४ ॥ सुतासो
मधुमत्तमाः सोमा इन्द्राय मन्दिनः । पवित्रवन्तो अक्षरं देवां गच्छन्तु वो मदाः ॥
इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् । वाचस्पतिर्मखस्यते विश्वस्येशान ओ-
जसः ॥ सहस्रधारः पवते समुद्रो वाचमीङ्खयः । सोमस्पती रयीणां सखेन्द्रस्य
दिवेदिवे ॥ १५ ॥ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सन्तदाशत ॥ तपोष्पवित्रं विततं
दिवस्पदेऽर्चन्तो अस्य तन्तवो व्यस्थिरन् । अवन्त्यस्य पवितारमाशवो दिवः पृष्ठ-
मधिरोहन्ति तेजसा ॥ अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ १६ ॥ प्र मं-
हिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे । उपस्तुतासो अग्नये ॥ आ वंसते
मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः । कुविन्नो अस्य सुमतिर्भवीयस्यच्छ वाजे-
भिरागमत् ॥ १७ ॥ तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् । उ लोककृत्नु-
मद्रिवो हरिश्रियम् ॥ येन ज्योतींष्यायवे मनवे मनवे च विवेदिथ । मन्दानो अस्य
बर्हिषो विराजसि ॥ तदद्या चित्त उक्थिनोऽनुष्टुवन्ति पूर्वथा । वृषपत्नीरपो जया
दिवेदिवे ॥ १८ ॥ श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति । सुवीर्यस्य गोमतो
रायस्पूर्द्धिः महां असि ॥ यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत् । चिकित्वि-
न्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥ तमुष्टवाम यं गिर इन्द्रमुक्थ्यानि वावृधुः ।
पुरूण्यस्य पौंस्या सिषासन्तो वनामहे ॥ १९ ॥

इति द्वितीयोऽर्धः प्रपाठकः द्वितीयश्च

प्रपाठकः समाप्तः

# अथ तृतीयः प्रपाठकः ॥

ऋषिः—१ आकृष्टाभाषाः । २ अमहीयुः । ३ मेध्यातिथिः ४, १२ बृहन्मतिः । ५ भृगुर्वारुणिर्जमदग्निः । ६ सुतंभरआत्रेयः । ७ गृत्समदः । ८, २१ गोतमो राहूगणः । ९, १३ वसिष्ठः । १० दृढच्युत आगस्त्यः । ११ सप्तर्षयः । १४ रेभः काश्यपः । १५ पुरुहन्मा । १६ असितः काश्यपो देवलो वा । १७ शक्तिरुरुश्च क्रमेण । १८ अग्निः । १९ प्रतर्दनो दैवोदासिः । २० प्रयोगो भार्गव अग्निर्वा पावको वार्हस्पत्यः अथर्वाग्नी गृहपतियविष्ठौ सहसः सुतौ तयोर्वान्यतरः ॥ देवता—१—५, १०—१२, १६—१९ पवमानः सोमः । ६, २० अग्निः । ७ मित्रावरुणौ । ८, १३—१५, २१ इन्द्रः । ९ इन्द्राग्नी ॥ छन्दः—१, ६ जगती । २—५, ७—१०, १२, १६, २० गायत्री । ११ बृहती सतोबृहती च क्रमेण । १३ विराट् । १४ अतिजगती । १५ प्रागाथं । १७ ककुप् च सतोबृहती च क्रमेण । १८ उष्णिक् । १९ त्रिष्टुप् । २१ अनुष्टुप् ॥ स्वरः—१, ६, १४ निषादः । २—५, ७—१०, १२, १६, २० षड्जः । ११, १३, १५, १७ मध्यमः । १८ ऋषभः । १९ धैवतः । २१ गान्धारः ॥

प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रं पयसा धरीमणि । प्रान्तरिक्षात् स्थाविरीस्ते असृक्षत ये त्वा मृजन्त्युषिषाण वेधसः ॥ उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परियन्ति केतवः । यदी पवित्रे अधिमृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति ॥ विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परियन्ति केतवः । व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि ॥ १ ॥ पवमानो अजीजनद्दिवश्चित्रन्न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥ पवमान रसस्तव मदो राजन्नदुच्छुनः । वि वारमव्यमर्षति ॥ पवमानस्य ते रसो दक्षो विराजति द्युमान् । ज्योतिर्विश्वं स्वर्दृशे ॥ २ ॥ प्रयद्गावो न भूर्णयस्त्वेषा

अयासो अक्रतुः । घ्नन्तः कृष्णामप त्वचम् ॥ सुवितस्य वनामहे तिसेतुं दुराय्यम् ।
साह्याम दस्युमव्रतम् ॥ शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः । चरन्ति
विद्युतो दिवि ॥ आपवस्व महीमिषं गोमदिन्दो हिरण्यवत् । अश्ववत्सोम वीर-
वत् ॥ पवस्व विश्वचर्षण आ महीरोदसी पृण । उषाः सूर्यो न रश्मिभिः ॥ परि
नः शर्मयन्त्या धारया सोम विश्वतः । सरारसेव विष्टपम् ॥ ३ ॥ आशुरर्ष बृह-
न्मते परि प्रियेण धाम्ना । यत्र देवा इति ब्रवन् ॥ परिष्कृण्वन्ननिष्कृतं जनाय
यातयन्निषः । वृष्टिं दिवः परिस्रव ॥ अयं स यो दिवस्परि रघुयामा पवित्र आ ।
सिन्धोरूर्मा व्यक्षरत् ॥ सुत एति पवित्र आ त्विषिं दधान ओजसा । विचक्षाणो
विरोचयन् ॥ आविवासन् परावतो अथो अर्वावतः सुतः । इन्द्राय सिच्यते मधु ॥
समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ ४ ॥ हिन्वन्ति
सूरमुस्रयः स्वसारो जामयस्पतिम् । महामिन्दुं महीयुवः ॥ पवमान रुचारुचा देव
देवेभ्यः सुतः । विश्वावसून्याविश ॥ आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ॥
इषे पवस्व संयतम् ॥ ५ ॥ जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय
नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥ त्वामग्ने
अङ्गिरसो गुहाहित मन्वविन्दञ्छिश्रियाणं वने वने । स जायसे मथ्यमानः सहो
महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥ यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे
समिन्धते । इन्द्रेण देवैः सरथं स बर्हिषि सीदं नि होता यजथाय सुक्रतुः ॥ ६ ॥
अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम् ॥ राजानाव-
नभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आशाते ॥ ता सम्राजा घृतासुती आदि-
त्या दानुनस्पती । सचेते अनवह्वरम् ॥ ७ ॥ इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रति-
ष्कुतः । जघान नवतीर्नव ॥ इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । तद्विद-
च्छर्यणावति । अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥ ८ ॥
इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ शृणुतं जरितु-
र्हवमिन्द्राग्नी वनतं गिरः । ईशाना पिप्यतं धियः ॥ मा पापत्वाय नो नरेन्द्राग्नी

माभिशस्तये । मा नो रीरधतं निदे ॥ ९ ॥ पवस्व दक्षसाधनो देवेभ्यः पीतये
हरे । मरुद्भ्यो वायवे मदः ॥ सं देवैः शोभते वृषा कविर्योनावधि प्रियः । पव-
मानो अदाभ्यः ॥ पवमान धिया हितोऽ३ऽभियोनिं कनिक्रदत् । धर्मणा वायु-
मारुहः ॥ १० ॥ तवाहं सोम रारण सख्य इन्दो दिवेदिवे । पुरूणि बभ्रो नि-
चरन्ति मामवपरिधीं रतितां इहि ॥ तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र
ऊधनि । घृणा तपन्तमति सूर्यं परः शकुना इव पप्तिम ॥ ११ ॥ पुनानो अक्रमी-
दभि विश्वा मृधो विचर्षणिः । शुम्भन्ति विप्रं धीतिभिः ॥ आ योनिमरुणो रुह-
द्गमदिन्द्रो वृषा सुतम् । ध्रुवे सदसि सीदतु ॥ नू नो रयिं महामिन्दोऽस्मभ्यं सोम
विश्वतः । आपवस्व सहस्रिणम् ॥ १२ ॥ पिबासोममिन्द्र मन्दतु त्वा यं ते सुषा-
व हर्यश्वाद्रिः । सोतुर्बाहुभ्यां सुयतो नार्वा ॥ यस्ते मदो युज्यश्चारुरस्ति येन
वृत्राणि हर्यश्व हंसि । स त्वामिन्द्र प्रभूवसो ममत्तु ॥ बोधा सु मे मघवन्वाचमेमां
यां ते वसिष्ठो अर्चति प्रशस्तिम् । इमा ब्रह्म सधमादे जुषस्व ॥ १३ ॥ विश्वाः
पृतना अभिभूतरन्नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे । क्रत्वे वरे स्थे मन्या-
मुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे ।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ समु रेभासो अस्वरन्निन्द्रं
सोमस्य पीतये । स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ १४ ॥ यो राजा
चर्षणीनां याता रथेभिरध्रिगुः । विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥
इन्द्रन्तं शुम्भपुरुहन्मन्नवसे यस्य द्विता विधर्त्तरि । हस्तेन वज्रः प्रतिधायि दर्शतो
महां देवो न सूर्यः ॥ १५ ॥ परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । स्वानै-
र्याति कविक्रतुः ॥ स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् । महान्मही ऋता-
वृधा ॥ प्र प्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः । वीत्यर्ष पनिष्टये ॥ १६ ॥
त्वं ह्याऽङ्ग दैव्य पवमानः जनिमानि द्युमत्तमः । अमृतत्वाय घोषयन् ॥ येना नवग्वा
दध्यङ्ङपोर्णुते येन विप्रास आपिरे । देवानां सुम्ने अमृतस्य चारुणो येन श्रवां-
स्याशत ॥ १७ ॥ सोमः पुनान ऊर्मिणाव्यं वारं विधावति । अग्रे वाचः पवमानः

कनिक्रदत् ॥ धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम् । अभि त्रिपृष्ठं मतयः समस्वरन् ॥ असर्जि कलशाँ अभि मीढ्वान्त्सप्तिर्न वाजयुः । पुनानो वाचञ्जनयन्नसिष्यदत् ॥ १८ ॥ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्य्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिरस्तोमान्पवमानो मनीषाः । अन्तः पश्यन्वृजनेमावराण्यातिष्ठति वृषभो गोषु जानन् ॥ १९ ॥ अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥ अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥ अयं विश्वा अभिश्रियोऽग्निर्देवेषु पत्यते । आ वाजैरुप नो गमत् ॥ २० ॥ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य त्वाभ्यक्षरं धारा ऋतस्य सादने ॥ नकिष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे । नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥ इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन । सुताअमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ २१ ॥ इन्द्र जुषस्व प्रवहायाहि शूर हरिह । पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ॥ इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न । अस्य सुतस्य स्वाऽ३ऽर्णोप त्वा मदाः सुवाचो अस्थुः ॥ इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न । बिभेद बलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥२२॥

## इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ त्रय ऋषिगणाः । २ काश्यपः । ३, ४, १३ असितः काश्यपो देवलो वा । ५ अवत्सारः । ६, १६ जमदग्निः । ७ अरुणोवैतहव्यः । ८ उरुचक्रिरात्रेयः । ९ कुरुसुतिः काण्वः । १० भरद्वाजो वार्हस्पत्यः । ११ भृगुर्वारुणिर्जमदग्निर्वा । १२ सप्तर्षयः । १४, १५, २३ गोतमोराहूगणः । १७ ऊर्ध्वसद्मा कृतयशाश्च क्रमेण । १८ त्रितः । १९ रेभसूनूकाश्यपौ । २० मन्युर्वासिष्ठः । २१ वसुश्रुतआत्रेयः । २२ नृमेधः ॥ देवता—१–६, ११–१३, १६–२० पवमानः सोमः । ७, २१ अग्निः । ८ मित्रावरुणौ । ९, १४, १५, २२, २३

अहं सूर्य इवाजनि ॥ अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत् । येनेन्द्रः
शुष्ममिद्दधे ॥ ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः । ममेद्वर्धस्व सुष्टुतः
॥ ५ ॥ अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत । ये देवत्रा य आयुषु ते-
भिर्नो महया गिरः ॥ प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः । तनये
तोके अस्मदा सम्यङ्वाजैः परीवृतः ॥ त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देवतातये रायो दानाय चोदय ॥ ६ ॥ त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय
श्रवसे धियं दधुः । स त्वं नो वीर वीर्याय चोदय ॥ अभ्यभि हि श्रवसा तत-
र्दिथोत्सं न कञ्चिज्जनपानमक्षितम् । शर्याभिर्न भरमाणो गभस्त्योः ॥ अजीजनो
अमृत मर्त्याय कमृतस्य धर्मन्नमृतस्य चारुणः । सदासरो वाजमच्छा सनिष्यदत्
॥ ७ ॥ एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु । प्र राधांसि चोदयते महि-
त्वना ॥ उपो हरीणां पतिं राधः पृञ्चन्तमब्रवम् । नूनं श्रुधि स्तुवतो अश्वस्य ॥
न ह्यां३ङ्ग पुरा च न जज्ञे वीरतरस्त्वत् । न की राया नैवथा न भन्दना ॥ ८ ॥
नदं व ओदतीनां नदं योयुवतीनाम् । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ ९ ॥
देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् । उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव
ओहते ॥ तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत । दधाति रत्नं विधते
सुवीर्यमग्निर्जनाय दाशुषे ॥ १० ॥ अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृ-
ण्वतः । सहस्रसां मेधसाताविव त्मनाग्निं धीभिर्नमस्यत ॥ प्र दैवोदासो अग्नि-
र्देव इन्द्रो न मज्मना । अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥ ११ ॥
अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ अग्निरृषिः
पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ अग्ने पवस्व स्वपा अस्मे
वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ १२ ॥ अग्ने पावक रोचिषा मन्द्रया दे-
व जिह्वया । आ देवान्वक्षि यक्षि च ॥ तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।
देवाँ आ वीतये वह ॥ वीतिहोत्रा त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तम-

ध्वरे ॥ १३ ॥ अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥ आ नो
अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ १४ ॥ अग्निं हि-
न्वन्तु नो धियः सप्तिमाशुमिवाजिषु । तेन जेष्म धनं धनम् ॥ यया गा आकरा-
महै सेनयाग्ने तवोत्या । तां नो हिन्व मघत्तये ॥ आग्ने स्थूरं रयिं भर पृथुं गो-
मन्तमश्विनम् । अङ्धि खं वर्त्तया पविम् ॥ अग्ने नक्षत्रमजरमासूर्यं रोहयो दिवि ।
दध ज्योतिर्जनेभ्यः ॥ अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् । बोधास्तोत्रे व-
यो दधत् ॥ १५ ॥ अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि
जिन्वति ॥ ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः । स्तोता स्यां तव शर्मणि ॥
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ १६ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१, ११ गोतमो राहूगणः । २, ९ विश्वामित्रः । ३ विरूप आंगिरसः । ४, ७ भर्गः प्रागाथः । ५ त्रितः । ६ उशनाकाव्यः । ८ सुदीतिपुरुमीळ्हौ तयोर्वान्यतरः । १० सोभरिः काण्वः । १२ गोपवन आत्रेयः । १३ भरद्वाजो बार्हस्पत्यो वीतहव्यो वा । १४ प्रयोगो भार्गव अग्निर्वा पावको बार्हस्पत्यः, अथवाग्नी गृहपतियविष्ठौ सहसः सुतौ तयोर्वान्यतरः ॥ अग्निर्देवता ॥ छन्दः—१–३, ६, ९, १४ गायत्री । ४, ७, ८ प्रागाथं । ५ त्रिष्टुप् । १० प्रागाथं काकुभं । ११ उष्णिक् । १२ अनुष्टुप् प्रथमस्य गायत्री चरमयोः । १३ जगती ॥ स्वरः—१–३, ६, ९, १४ षड्जः । ४, ७, ८, १० मध्यमः । ५ धैवतः । ११ ऋषभः । १२ गान्धारः प्रथमस्य षड्जः चरमयोः । १३ निषादः ॥

कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥ त्वं जा-
मिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥ यजा नो मित्राव-
रुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ १ ॥ ईडेन्यो नमस्यस्तिर-
स्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥ वृषो अग्निः समिध्यतेऽश्वो न देववा-

इनः । तं हविष्मन्त ईडते ॥ वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दी-
द्यतं बृहत् ॥ २ ॥ उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः । अग्ने शुक्रास ई-
रते ॥ उप त्वा जुह्वोऽ३मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः ॥ मन्द्रं हो-
तार मृत्विजं चित्रभानुं विभावसुम् ॥ अग्निमीडे स उ श्रवत् ॥ ३ ॥ पाहि नो
अग्न एकया पाह्यू३ऽत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभि-
र्वसो ॥ पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नो व । त्वामिद्धि नेदि-
ष्ठं देवतातय आपिं नक्षामहे वृधे ॥ ४ ॥ इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सु-
षुमां अदर्शि । चिकिद्विभाति भासा बृहता सिक्नीमेति रुशतीमपाजन् ॥ कृष्णां
यदेनीमभिवर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम् । ऊर्ध्वं भानुं सूर्यस्य स्तभाय-
न्दिवो वसुभिररतिर्विभाति ॥ भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति
पश्चात् । सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभिराममस्थात् ॥ ५ ॥ कया ते अग्ने
अङ्गिर ऊर्जो नपादुपस्तुतिम् । वराय देव मन्यवे ॥ दाशेम कस्य मनसा यज्ञस्य
सहसोयहो । कदुवोच इदं नमः ॥ अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षि-
तीः । वाजद्रविणसो गिरः ॥ ६ ॥ अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ अच्छा हि त्वा सहसः सूनो
अङ्गिरः स्रुचश्चरन्त्यध्वरे । ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ ७ ॥
अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् । अच्छा यज्ञासो नमसा पुरुवसुं
पुरुप्रशस्तमूतये ॥ अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् । द्विता यो
भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ ८ ॥ अदाभ्यः पुर एता विशामग्नि-
र्मानुषीणाम् । तूर्णीरथः सदा नवः ॥ अभि प्रयांसि वाहसा दाश्वां अश्नोति
मर्त्यः । क्षयं पावकशोचिषः ॥ साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।
अग्निस्तुविश्रवस्तमः ॥ ९ ॥ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अ-
ध्वरः । भद्रा उत प्रशस्तयः ॥ भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिः ॥ १० ॥ अग्ने वाजस्य गोमत

ईशानः सहसो यहो । अस्मे देहि जातवेदो महि श्रवः ॥ स इधानो वसुः कवि-
ग्नि रीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ क्षपो राजन्नुत त्मनाग्ने
वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥ ११ ॥ विशोविशो वो अ-
तिथिं वाजयन्तः पुरुप्रियम् । अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ यं ज-
नासो हविष्मन्तो मित्रं न सर्पिरासुतिम् । प्रशंसन्ति प्रशस्तिभिः ॥ पन्यांसं जा-
तवेदसं यो देवतात्युद्यता । हव्यान्यैरयद्दिवि ॥ १२ ॥ समिद्धमग्निं समिधा गि-
रा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् । विप्रं होतारं पुरुवारमद्रुहम् कविं सु-
म्नैरीमहे जातवेदसम् ॥ त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमी-
ड्यम् । देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा निषेदिरे ॥ विभूष-
न्नग्न उभयाँ अनुव्रता दूतो देवानां रजसी समीयसे । यत्ते धीतिं सुमतिमावृ-
णीमहे ऽध स्मा नस्त्रिवरूथः शिवो भव ॥ १३ ॥ उप त्वा जामयो गिरो देदिश-
तीर्हविष्कृतः । वायोरनीके अस्थिरन् ॥ यस्य त्रिधात्ववृतम्बर्हिस्तस्थावसन्दिनम् ।
आपश्चिन्निदधा पदम् ॥ पदं देवस्य मीढुषो नाधृष्टाभिरूतिभिः । भद्रा सूर्य
इवोपदृक् ॥ १४ ॥

## इति द्वितीयोऽर्धः प्रपाठकः

ऋषिः—१, ८, १८ मेधातिथिः काण्वः । २ विश्वामित्रः । ३, ४ भर्गः प्रागाथः । ५ सोभरिः काण्वः । ६, १५ शुनःशेप आजीगर्तिः । ७ सुकक्षः । ९ विश्वकर्मा भौवनः । १० अनानतः पारुच्छेपिः । ११ भरद्वाजो बार्हस्पत्यः । १२ गोतमो राहूगणः । १३ ऋजिश्वा । १४ वामदेवः । १६, १७ हर्यतः प्रागाथः देवातिथिः काण्वः । १९ पुष्टिगुः काण्वः । २० पर्वत नारदौ । २१ अत्रिः ॥ देवता—१, ३, ४, ७, ८, १५—१९ इन्द्रः । २ इन्द्राग्नी । ५ अग्निः । ६ वरुणः । ९ विश्वकर्मा । १०, २०, २१ पवमानः सोमः । ११ पूषा । १२ मरुतः । १३ विश्वेदेवाः । १४ द्यावापृथिव्यौ ॥ छन्दः—१, ३, ४, ८, १७—१९ प्रागाथं । २, ६, ७, ११—१६ गायत्री । ... बृहती । ९ त्रिष्टुप् । १० अत्यष्टिः ।

२० उष्णिक् । २१ जगती ॥ स्वरः-१, ३, ४, ५, ८, १७-१९ मध्यमः । २, ६, ७, ११—१६ षड्जः । ९ धैवतः । १० गान्धारः । २० ऋषभः । २१ निषादः ॥

अभि त्वा पूर्वपीतय इन्द्रस्तोमेभिरायवः । समीचीनास ऋभवः समस्वर-
न्रुद्रा गृणन्त पूर्व्यम् ॥ अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्यातमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा ॥ १ ॥ प्र वामर्चन्त्युक्थिनो
नीथाविदो जरितारः । इन्द्राग्नी इष आवृणे ॥ इन्द्राग्नी नवतिम्पुरो दासपत्नी-
रधूनुतम् । साकमेकेन कर्मणा ॥ इन्द्राग्नी अपसस्पर्युपप्रयन्ति धीतयः । ऋतस्य
पथ्याऽ३ऽअनु ॥ इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हि-
तम् ॥ २ ॥ शग्ध्यूऽ३षु शचीपत इन्द्र विश्वाभिरूतिभिः । भगन्नहि त्वा यशसं
वसुविदमनु शूर चरामसि ॥ पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।
नकिर्हि दानं परि मर्धिषत्त्वे यद्यद्यामि तदाभर ॥ ३ ॥ त्वं ह्येहि चेरवे विदा भ-
गं वसुत्तये । उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ त्वम्पुरूसहस्राणि
शतानि च यूथा दानाय मंहसे । आ पुरन्दरं चकृम विप्रवचस इन्द्रङ्गायन्तोऽव-
से ॥ ४ ॥ यो विश्वा दयते वसु होता मन्द्रो जनानाम् । मधोर्न पात्रा प्रथमा-
न्यस्मै प्र स्तोमा यन्त्वग्नये ॥ अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः ।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ ५ ॥ इमम्मे वरुण श्रुधी
हवमद्या च मृडय । त्वामवस्युराचके ॥ ६ ॥ कया त्वं न ऊत्याभि प्रमन्दसे वृ-
षन् । कया स्तोतृभ्य आभर ॥ ७ ॥ इन्द्रमिद्देवतातय इन्द्रम्प्रयत्यध्वरे । इन्द्रं
समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ इन्द्रो मन्हा रोदसी पप्रथच्छव इ-
न्द्रः सूर्यमरोचयत् । इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे स्वानास इन्दवः ॥ ८ ॥
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तन्वांऽ३ऽस्वा हि ते । मुह्यन्त्वन्ये अभि-
तो जनास इहास्माकम्मघवा सूरिरस्तु ॥ ९ ॥ अया रुचा हरिण्या पुनानो
विश्वा द्वेषांसि तरति सयुग्वभिः सूरो न सयुग्वभिः । धारा पृष्ठस्य रोचते पुना-

नो अरुषो हरिः विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ प्राची-
मनु प्र दिशं याति चेकितत्सं रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः ।
अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय हर्षयन् वज्रश्च यद्भवथो अनपच्युता समत्स्वन-
पच्युता ॥ त्वं ह त्यत्पणीनां विदो वसु सम्मातृभिर्मर्जयसि स्व आदम ऋतस्य
धीतिभिर्दमे । परावतो न साम तद्यत्रारणन्ति धीतयः त्रिधातुभिररुषीभिर्वयो द-
धे रोचमानो वयो दधे ॥ १० ॥ उत नो गोषणिं धियमश्वसां वाजसामुत । नृव-
त्कृणुह्यूतये ॥ ११ ॥ शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा काम-
स्य वेनतः ॥ १२ ॥ उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु
नः ॥ १३ ॥ प्र वां महि द्यवी अभ्युपस्तुतिम्भरामहे । शुची उपप्रशस्तये ॥ पु-
नाने तन्वा मिथः स्वेन दक्षेण राजथः । ऊह्याथे सनादृतम् ॥ मही मित्रस्य सा-
धथस्तरन्ती पिप्रती ऋतम् । परि यज्ञन्निषेदथुः ॥ १४ ॥ अयमु ते समतसि क-
पोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥ स्तोत्रं राधानां पते गिर्वाहो वीर य-
स्य ते । विभूतिरस्तु सूनृता ॥ ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । स-
मन्येषु ब्रवावहै ॥ १५ ॥ गाव उप वदावटे मही यज्ञस्य रप्सुदा । उभा कर्णा हि-
रण्यया ॥ अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु । अवटस्य विसर्जने ॥ सिञ्च-
न्ति नमसावटमुच्चाचक्रं परिज्मानम् । नीचीनबारमक्षितम् ॥ १६ ॥ मा भेम मा
श्रमिष्मोग्रस्य सख्ये तव । महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ सव्या-
मनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति । मध्वा सम्पृक्ताः सारघेण धेनवस्तू-
यमेहि द्रवा पिब ॥ १७ ॥ इमा उ त्वा पुरूवसो गिरो वर्द्धन्तु या मम । पावक-
वर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥ अयं सहस्रमृषिभिः सहस्कृतः समु-
द्र इव पप्रथे । सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ १८ ॥ य-
स्यायं विश्व आर्यो दासः शेवधिपा अरिः । तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो
अज्यते रयिः ॥ तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः । अस्मे रयिः

पप्रथं वृष्ण्यं शवोऽस्मे स्वानास इन्दवः ॥ १९ ॥ गोमन्न इन्दो अश्ववत्सु-
तः सुदक्ष धनिव । शुचिञ्च वर्णमधि गोषु धारय ॥ स नो हरीणाम्पत इन्दो देवप्सर-
स्तमः । सखेव सख्ये नर्यो रुचे भव ॥ सनेमि त्वमस्मदा अदेवङ्कञ्चिदत्रिणम् । साह्वां इ-
न्दो परि बाधो अपद्वयुम् ॥२०॥ अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥ विपश्चिते पव-
मानाय गायत मही न धारात्यन्धो अर्षति । अहिर्न जूर्णामतिसर्पति त्वचमत्यो न
क्रीडन्नसरद्वृषा हरिः ॥ अग्रेगो राजाप्यस्तविष्यते विमानो अह्नाम्भुवनेष्वर्पितः ।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥ २१ ॥

इति तृतीयोऽर्धः प्रपाठकः सप्तमश्च

प्रपाठकः समाप्तः

---

# अथाष्टमः प्रपाठकः ॥

ऋषिः—१, ७ शुनः शेप आजीगर्तिः । २ मधुच्छन्दा वैश्वामित्रः । ३ शंयुर्बार्हस्पत्यः । ४ वसिष्ठः । ५ वामदेवः । ६ रेभसूनू काश्यपौ । ८ नृमेधः । ९, ११ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ । १० श्रुतकक्षः सुकक्षो वा । १२ विरूपः । १३ वत्सः काण्वः । १४* एतत्साम ॥ देवता—१, ३, ७, १२ अग्निः । २, ८–११, १३ इन्द्रः । ४ विष्णुः । ५ इन्द्रवायू । ६ पवमानः सोमः । १४ एतत्साम ॥ छन्दः—१, २, ७, ९, १०, १२, १३ गायत्री । ३ बृहती । ४ त्रिष्टुप् । ५, ६ अनुष्टुप् । ८ प्रागाथं । ११ उष्णिक् । १४ एतत्साम ॥ स्वरः—१, २, ७, ९, १०, १२, १३ षड्जः । ३, ८ मध्यमः । ४ धैवतः । ५, ६ गान्धारः । ११ ऋषभः । १४ एतत्साम ॥

विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥ यच्चिद्धि शश्वता तना देवन्देवं यजामहे । त्वे इद्धूयते हविः ॥ प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ॥ १ ॥ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥ वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥ २ ॥ त्वं नश्चित्र ऊत्या वसो राधांसि चोदय । अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः । अग्ने हेडांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ ३ ॥ किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् ।

* नान्यत्र कस्यापि ऋग् दृश्यते

तन्त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥ वषट् ते वि-
ष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्द्धन्तु त्वा सुष्टुतयो गि-
रो मे यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥ वायो शुक्रो अयामि ते मध्वो अग्र-
न्दिविष्टिषु । आयाहि सोमपीतये स्पार्हो देव नियुत्वता ॥ इन्द्रश्च वायवेषां सो-
मानाम्पीतिमर्हथः । युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ वायवि-
न्द्रश्च शुष्मिणा सरथं शवसस्पती । नियुत्वन्ता न ऊतय आयातं सोमपीतये
॥ ५ ॥ अध क्षपापरिष्कृतो वाजाँ अभिप्रगाहसे । यदी विवस्वतो धियो हरिं
हिन्वन्ति यातवे ॥ तमस्य मर्ज्जयामसि मदो य इन्द्रपातमः । यङ्गाव आसभिर्दधुः
पुरा नूनञ्च सूरयः ॥ तङ्गाथया पुराण्या पुनानमभ्यनूषत । उतो कृपन्त धीतयो
देवानां नाम बिभ्रतीः ॥ ६ ॥ अश्वन्न त्वा वारवन्तं वन्दध्या अग्निन्नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ
अस्माकं बभूयात् ॥ स नो दूराच्च निमर्त्यादघायोः । पाहि सदमिद्विश्वायुः
॥ ७ ॥ त्वमिन्द्र प्रतूर्त्तिष्वभि विश्वा असि स्पृधः । अशस्तिहा जनिता वृत्रतूरसि
त्वन्तूर्य तरुष्यतः ॥ अनु ते शुष्मन्तुरयन्तमीयतुः क्षोणी शिशुन्न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ ८ ॥ यज्ञ इन्द्रमवर्द्धयद्य-
द्भूमिं व्यवर्त्तयत् । चक्राण ओपशन्दिवि ॥ व्या३न्तरिक्षमतिरन्मदे सोमस्य
रोचना । इन्द्रो यदभिनद्वलम् ॥ उद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहासतीः ।
अर्वाञ्चन्नुनुदे वलम् ॥ ९ ॥ त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्याव-
यस्यूतये ॥ युध्मं सन्तमनर्वाणं सोमपामनपच्युतम् । नरमवार्यक्रतुम् ॥ शिक्षाण
इन्द्र राय आ पुरु विद्वाँ ऋचीषम । अवा नः पार्ये धने ॥ १० ॥ तवत्यदिन्द्रियं २९
बृहत्तव दक्षमुत क्रतुम् । वज्रं शिशाति धिषणा वरेण्यम् ॥ तव द्यौरिन्द्र पौंस्यं
पृथिवी वर्द्धति श्रवः । त्वामापः पर्वतासश्च हिन्विरे ॥ त्वां विष्णुर्बृहन् क्षयो मित्रो
गृणाति वरुणः । त्वां शर्द्धो मदत्यनु मारुतम् ॥ ११ ॥ नमस्ते अग्न ओजसे गृण-

न्ति देव कृष्टयः । अमैरामित्रमर्दय ॥ कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरुणस्कृधि ॥ मा नो अग्ने महाधने परावर्ग्भारभृद्यथा । संवर्गं सं रयिञ्जय ॥ १२ ॥ समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥ विचिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना । वज्रेण शतपर्वणा ॥ ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥ १३ ॥ सुमन्मा वस्वी रन्ती सूनरी ॥ सरूपवृषन्नागहीमौ भद्रौ धुर्यावभि । ताविमा उपसर्पतः ॥ नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति । शृङ्गेभिर्दशभिर्दिशन् ॥ १४ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ मेधातिथिः काण्वः प्रियमेधश्चांगिरसः । २ श्रुतकक्षः सुकक्षो वा । ३ शुनःशेप आजीगर्तिः । ४ शंयुर्बार्हस्पत्यः । ५, १५ मेधातिथिः काण्वः । ६, ९ वसिष्ठः । ७ आयुः काण्वः । ८ अंबरीष ऋजिश्वा च । १० विश्वमना वैयश्वः । ११ सौभरिः काण्वः । १२ सप्तर्षयः । १३ कलिः प्रागाथः । १४, १७ विश्वामित्रः । १६ निध्रुविः काश्यपः । १८ भरद्वाजो बार्हस्पत्यः । १९ एतत्साम ॥ देवता—१, २, ४, ६, ७, ९, १०, १३, १५ इन्द्रः । ३, ११, १८ अग्निः । ५ विष्णुः । ८, १२, १६ पवमानः सोमः । १४, १७ इन्द्राग्नी । १९ एतत्साम ॥ छन्दः—१–५, १४, १६–१८ गायत्री । ६, ७, ९, १३ प्रागाथं । ८ अनुष्टुप् । १० उष्णिक् । ११ प्रागाथं काकुभं । १२, १५ बृहती । १९ इति साम ॥ स्वरः—१–५, १४, १६—१८ षड्जः ६, ७, ९, ११–१३, १५ मध्यमः । ८ गान्धारः । १० ऋषभः ॥

पन्यंपन्यमित्सोतार आ धावत मद्याय । सोमं वीराय शूराय ॥ एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् । इन्द्रं गीर्भिर्गिर्वणसम् ॥ पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् । नियमते शतमूतिः ॥ १ ॥ आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्रातिरिच्यते ॥ विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे । य इन्द्र जठरेषु ते ॥ अरन्त इन्द्र कुक्षये सोमो भवतु वृत्रहन् । अरन्धा-

मभ्य इन्दवः ॥ २ ॥ जराबोधतद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय
दृशीकम् ॥ स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतु ॥
स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानुः ॥ ३ ॥ तद्वो
गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥ न घा वसुर्नियमते
दानं वाजस्य गोमतः । यत्सीमुपश्रवद्गिरः ॥ कुवित्सस्य प्र हि व्रजङ्गोमन्तन्दस्यु-
हा गमत् । शचीभिरप नो वरत् ॥ ४ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांसुले ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो ध-
र्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः
सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ त-
द्विप्रासो विपन्युवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ अतो देवा
अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्या अधि सानवि ॥ ५ ॥ मोषु त्वा वा-
घतश्च नारे अस्मन्निरीरमन् । आरात्ताद्वा सधमादन्न आगहीह वा सन्नुपश्रुधि ॥
इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते । इन्द्रे काममञ्जरितारो वसू-
यवो रथे न पादमादधुः ॥ ६ ॥ अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत । पूर्वी-
र्ऋतस्य बृहतीरनूषतस्तोतुर्मेधा असृक्षत ॥ समिन्द्रो रायो बृहतीरधूनुत सङ्क्षो-
णी समु सूर्यम् । संशुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः ॥ ७ ॥
इन्द्राय सोमपातवे वृत्रघ्ने परिषिच्यसे । नरे च दक्षिणावते वीराय सदनासदे ॥
तं सखायः पुरूरुचं वयं यूयं च सूरयः । अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥
परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण । यो देवान्विश्वाँ इत्परिमदेनसहगच्छति
॥८॥ कस्तमिन्द्र त्वा वसवामर्त्यो दधर्षति । श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाजं
सिषासति ॥ मघोनस्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु । तव प्रणीती हर्यश्व सूरि-
भिर्विश्वा तरेम दुरिता ॥ ९ ॥ एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः । एवा हि
वीर स्तवते सदावृधः ॥ इन्द्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम् । उदानंश शवसा न
भन्दना ॥ तं वो वाजानां पतिमहूमहि श्रवस्यवः । अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ १० ॥

तं गूर्धयास्वर्णरं देवासो देवमरतिं दधन्विरे । देवत्रा हव्यमूहिषे ॥ विभूतरातिं
विप्रचित्रशोचिषमग्निमीडिष्व यन्तुरम् । अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्व-
राय पूर्व्यम् ॥ ११ ॥ आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया । जनो न
पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ स मामृजे तिरो अण्वानि मेष्यो
मीढ्वांत्सप्तिर्न वाजयुः । अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः
॥ १२ ॥ वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् । तस्मा उ अद्य सवने सुतं भरा
नूनं भूषत श्रुते ॥ वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति । सेमं न स्तो-
मञ्जुजुषाण आगहीन्द्र प्रचित्रया धिया ॥ १३ ॥ इन्द्राग्नी रोचना दिवः परि
वाजेषु भूषथः । तद्वां चेति प्रवीर्यम् ॥ इन्द्राग्नी अपसस्पर्युपप्रयन्ति धीतयः ।
ऋतस्य पथ्या३अनु ॥ इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोर-
प्तूर्यं हितम् ॥ १४ ॥ क ईं वेदसुते सचा पिबन्तं कद्वयो दधे । अयं यः पुरो वि-
भिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
नकिष्ट्वा नियमदा सुते गमो महांश्चरस्योजसा ॥ य उग्रः सन्ननिष्टृतः स्थिरो र-
णाय संस्कृतः । यदि स्तोतुर्मघवा शृणवद्धवन्नेन्द्रो योषत्यागमत् ॥ १५ ॥ प-
वमाना असृक्षत सोमाः शुक्रास इन्दवः । अभि विश्वानि काव्या ॥ पवमाना दि-
वस्पर्यन्तरिक्षादसृक्षत । पृथिव्या अधिसानवि ॥ पवमानास आशवः शुभ्रा अ-
सृग्रमिन्दवः । घ्नन्तो विश्वा अपद्विषः ॥ १६ ॥ तोशा वृत्रहणा हुवे सजित्वा-
नापराजिता । इन्द्राग्नी वाजसातमा ॥ प्र वामर्चन्त्युक्थिनो नीथाविदो जरिता-
रः । इन्द्राग्नी इष आवृणे ॥ इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमे-
केन कर्मणा ॥ १७ ॥ उप त्वा रण्वसन्दृशं प्रयस्वन्तः सहस्कृत । अग्ने ससृज्म-
हे गिरः ॥ उपच्छायामिव घृणेरगन्म शर्म ते वयम् । अग्ने हिरण्यसन्दृशः ॥ य उ-
ग्र इव शर्यहा तिग्मशृङ्गो न वंसगः । अग्ने पुरो रुरोजिथ ॥ १८ ॥ ऋतावानं
वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ॥ य इदं प्रतिपप्रथे यज्ञस्य

स्वरुत्तिरन् । ऋतुनुत्सृजते वशी ॥ अग्निः प्रियेषु धामसु कामो भूतस्य भव्य-
स्य । सम्राडेको विराजति ॥ १९ ॥

इति द्वितीयोऽर्धः प्रपाठकः

ऋषिः—१ विरूप आङ्गिरसः । २, १८ अवत्सारः । ३ विश्वामित्रः । ४ देवातिथिः काण्वः । ५, ८, ९, १६ गोतमो राहूगणः । ६ वामदेवः । ७ प्रस्कण्वः काण्वः । १० वसुश्रुत आत्रेयः । ११ सत्यश्रवा आत्रेयः । १२ अवस्यात्रेयः । १३ बुधगविष्ठिरावात्रेयौ । १४ कुत्स आङ्गिरसः । १५ अत्रिः । १७ दीर्घतमा औचथ्य ॥ देवता—१, १०, १३ अग्निः । २, १८ पवमानः सोमः । ३-५ इन्द्रः । ६, ८, ११, १४, १६ उषाः । ७, ९, १२, १५, १७ अश्विनौ ॥ छन्दः—१, २, ६, ७, १८ गायत्री । ३, ५ बृहती । ४ प्रागाथं । ८, ९ उष्णिक् । १०—१२ पङ्क्तिः । १३—१५ त्रिष्टुप् । १६, १७ जगती ॥ स्वरः—१, २, ६, ७, १८ षड्जः । ३, ४, ५ मध्यमः । ८, ९ ऋषभः । १०—१२ पञ्चमः । १३—१५ धैवतः । १६, १७ निषादः ॥

अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वाऽ३स्वाम् । कविर्विप्रेण वावृधे ॥ ऊर्जोनपातमाहुवेऽग्निं पावकशोचिषम् । अस्मिन्यज्ञे स्वध्वरे ॥ स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरासत्सि बर्हिषि ॥ १ ॥ उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः । नुदस्व याः परिस्पृधः ॥ अया निजघ्निरोजसा रथसङ्गे धने हिते । स्तवा अबिभ्युषा हृदा अस्य व्रतानि नाधृषे पवमानस्य दूढ्या । रुज यस्त्वा पृतन्यति ॥ तं हिन्वन्ति मदच्युतं हरिं नदीषु वाजिनम् । इन्दुमिन्द्राय मत्सरम् ॥ २ ॥ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः । मा त्वा केचिन्नियेमुरिन्न पाशिनोति धन्वेव तां इहि ॥ वृत्रखादो बलं रुजः पुरां दर्मो अपामजः । स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढाचिदारुजः ॥ गम्भीरां उदधीं रिव क्रतुं पुष्यसि गा इव । प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥ ३ ॥ यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम् । आपित्वे नः प्रपित्वे तूयमागहि कण्वेषु सुसचा पिब ॥ मन्दन्तु

त्वा मघवन्निन्द्रेन्दवो राधो देयाय सुन्वते । आमुष्या सोममपिबश्चमूसुतं ज्येष्ठं तद्-
धिषे सहः ॥ ४ ॥ त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति
मर्डितेन्द्र ब्रवीमि ते वचः ॥ मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदाचना-
दभन् । विश्वा च न उपमिमीहि मानुषवसूनि चर्षणिभ्य आ ॥ ५ ॥ प्रतिष्या
सूनरी जनी व्युच्छन्ती परि स्वसुः । दिवो अदर्शि दुहिता ॥ अश्वेव चित्रारुषी माता
गवामृतावरी । सखा भूदश्विनोरुषा ॥ उत सखास्यश्विनोरुत माता गवामसि ।
उतोषो वस्व ईशिषे ॥ ६ ॥ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे-
वामश्विना बृहत् ॥ या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसु-
विदा ॥ वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद्वां रथो विभिष्पतात्
॥ ७ ॥ उपस्तच्चित्रमाभरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥
उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावति ॥ युंक्ष्वा
हि वाजिनीवत्यश्वां अद्यारुणां उषः । अथा नो विश्वा सौभगान्यावह ॥ ८ ॥
अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नियच्छतम् ॥ एह
देवा मयोभुवा दस्रा हिरण्यवर्त्तनी । उषर्बुधो वहन्तु सोमपीतये ॥ यावित्था
श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः । आ न ऊर्जं वहतमश्विना युवम् ॥ ९ ॥
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः । अस्तमर्वन्त आशवोऽस्तं नित्यासो
वाजिन इषं स्तोतृभ्य आभर ॥ अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नीरायं स्वाभुवं सुप्रीतो याति वार्यमिषं स्तोतृभ्य आभर ॥ सो अग्निर्यो
वसुर्गृणे सं यमायन्ति धेनवः । समर्वन्तो रघुद्रुवः संसुजातासः सूरय इषं
स्तोतृभ्य आभर ॥ १० ॥ महे नो अद्य बोधयोषो राये दिवित्मती । यथाचिन्नो
अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ या सुनीथे शौचद्रथे व्यौच्छो
दुहितर्दिवः । सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ सा नो
अद्या भरद्वसुर्व्युच्छा दुहितर्दिवः । यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते

अश्वसूनृते ॥ ११ ॥ प्रति प्रियतमं रथं वृषणं वसुवाहनम् । स्तोता वामश्विना
वृषिः स्तोमेभिर्भूषति प्रतिमाध्वी मम श्रुतं हवम् ॥ अत्यायातमश्विना तिरो
विश्वा अहं सना । दस्रा हिरण्यवर्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुतं
हवम् ॥ आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् । रुद्रा हिरण्यवर्त्तनी जुषा-
णा वाजिनी वसू माध्वीममश्रुतं हवम् ॥ १२ ॥ अबोध्यग्निः समिधा जनाना-
म्प्रति धेनुमिवायतीमुषासम् । यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सस्रते ना-
कमच्छ ॥ अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् । स-
मिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥ यदीं गणस्य रशनामजी-
गः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः । आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अ-
धयज्जुहूभिः ॥ १३ ॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्टवि-
भ्वा । यथा प्रसूता सवितुः सवायैवा रात्र्युषसे योनिमारैक् ॥ रुशद्वत्सा रुशती
श्वेत्यागादारैगु कृष्णासदनान्यस्याः । समानबन्धू अमृते अनूची द्यावावर्णं चरत
आमिनाने ॥ समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे । न मेथते न
तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ १४ ॥ आभात्यग्निरुषसामनीकमुद्वि-
प्राणान्देवया वाचो अस्थुः । अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना
घर्ममच्छ ॥ न संस्कृतं प्रमिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह । दिवाभि-
पित्वेऽवसागमिष्ठा प्रत्यवर्त्तिं दाशुषे शम्भविष्ठा ॥ उतायातं सङ्गवे प्रातरह्नो
मध्यन्दिन उदिता सूर्य्यस्य । दिवानक्तमवसाशन्तमेन नेदानीम्पीतिरश्विनाततान
॥ १५ ॥ एता उत्या उषसः केतुमक्रत पूर्वे अर्द्धे रजसो भानुमञ्जते । निष्कृ-
ण्वाना आयुधानीव धृष्णवः प्रति गावोरुषीर्यन्ति मातरः ॥ उदपप्तन्नरुणा भा-
नवो वृथा स्वायुजो अरुषीर्गा अयुक्षत । अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं
भानुमरुषीरशिश्रयुः ॥ अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परा-
वतः । इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ १६ ॥ अ-

बोध्यग्निर्ज्म उदेति सूर्यो व्यू३षाश्चन्द्रा मह्यावो अर्चिषा । आयुक्षातामश्वि-
ना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ यद्युञ्जाथे वृषणमश्विना रथं
घृतेन नो मधुना क्षत्रमुक्षतम् । अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूर-
साता भजेमहि ॥ अर्वाङ्त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु
सुष्टुतः । त्रिवन्धुरो मघवा विश्वसौभगः शन्न आवक्षद्द्विपदे चतुष्पदे ॥ १७ ॥
प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः । अच्छा वाजं सहस्रिणम् ॥ अभि
प्रियाणि काव्या विश्वा चक्षाणो अर्षति । हरिस्तुञ्जान आयुधा ॥ समर्मृजान
आयुभिरिभो राजेव सुव्रतः । श्येनो न वंसु षीदति ॥ स नो विश्वा दिवो
वसूतो पृथिव्या अधि । पुनान इन्दवाभरः ॥ १८ ॥

इति तृतीयोऽर्धः प्रपाठकः षष्ठमश्च

प्रपाठकः समाप्तः

# अथ नवमः प्रपाठकः ॥

ऋषिः—१ नृमेधः । ३ प्रियमेधः । ४ दीर्घतमा औचथ्यः । ५ वामदेवः । ६ प्रस्कण्वः काण्वः । ७ बृहदुक्थो वामदेव्यः । ८ बिन्दुः पूतदक्षो वा । ९ जमदग्निर्भार्गवः । १० सुकक्षः । ११—१३ वसिष्ठः । १४ सुदाः पैजवनः । १५ मेधातिथिः काण्वः प्रियमेधश्चांगिरसः । १६ नीपातिथिः काण्वः । १७ जमदग्निः । १८ परुच्छेपोर्दैवोदासीः । २ एतत्ससाम ॥ देवताः—१, १७ पवमानः सोमः । ३, ७, १०–१६ इन्द्रः । ४, ५, १८ अग्निः । ६ अग्निरश्विनावुषाः । ८ मरुतः । ९ सूर्यः । २ एतत्साम ॥ छन्दः—१, ८, १०, १५ गायत्री । ३ अनुष्टुप् प्रथमस्य, गायत्री उत्तरयोः । ४ उष्णिक् । ११ भुरिगनुष्टुप् । १३ विराडनुष्टुप् । ५ पदपङ्क्तिः । ६ प्रागाथंबार्हतं । ७ त्रिष्टुप् । ९ बृहती । १२ प्रागाथं । १४ शक्करी । १६ अनुष्टुप् । १७ द्विपदा गायत्री । १८ अत्यष्टिः । २ एतत्साम ॥ स्वरः—१, ८, १०, १५, १७ षड्जः । ३ गान्धारः प्रथमस्य, षड्जः उत्तरयोः । ४ ऋषभः । ११, १३, १६, १८ गान्धारः । ५ पञ्चमः । ६, ९, १२ मध्यमः । ७, १४ धैवतः । २ एतत्साम ॥

प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसः । देवाँ अनुप्रभूषतः ॥ सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा । ज्योतिर्जज्ञानमुक्थ्यम् ॥ सुषहा सोम तानि ते पुनानाय प्रभूवसो । वर्द्धासमुद्रमुक्थ्य ॥ १ ॥ एष ब्रह्माय ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ त्वामिच्छवसस्पते यन्ति गिरो न संयतः ॥ विस्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ॥ २ ॥ आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि । तुविकूर्मिमृतीषहमिन्द्रं शविष्ठसत्पतिम् ॥ तुविशुष्म तुविक्रतो शचीवो विश्वया मते । आपप्राथ महित्वना ॥ यस्य ते महिना महः परिज्मायन्तमीयतुः । हस्ता वज्रं हिरण्ययम् ॥ ३ ॥ आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा । सूरो न रुरुक्वाञ्छतात्मा ॥ अभि द्विजन्मा त्रीरोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।

होता यजिष्ठो अपां सधस्थे ॥ अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि
श्रवस्या । मर्तो यो अस्मै सुतुको ददाश ॥ ४ ॥ अग्ने तमद्याश्वन्न स्तोमैः क्र-
तुन्नभद्रं हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥ एभिर्नो अर्कैर्भवा नो अर्वाङ्स्वा३र्ण ज्योतिः । अग्ने
विश्वेभिः सुमना अनीकैः ॥ ५ ॥ अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य । आ-
दाशुषे जातवेदो वहा त्वमद्या देवां उषर्बुधः ॥ जुष्टो हि दूतो असि हव्यवाहनो-
ऽग्ने रथीरध्वराणाम् । सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ ६ ॥
विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार । देवस्य पश्य काव्यं
महित्वाद्यामार स ह्यः समान ॥ शाक्मना शाको अरुणः सुपर्ण आ यो महः
शूरः सनादनीडः । यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ ऐ-
भिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री । ये कर्मणः क्रियमाणस्य
मह्न ऋतेकर्ममुदजायन्त देवाः ॥ ७ ॥ अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः ।
उत स्वराजो अश्विना ॥ पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषध-
स्थस्य जावतः ॥ उतान्वस्य जोषमा इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति
॥ ८ ॥ बण्महाँ असि सूर्य बडादित्य महाँ असि । महस्ते सतो महिमा पनिष्टम
मह्ना देव महाँ असि ॥ बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ ९ ॥ उप नो हरिभिः
सुतं याहि मदानाम्पते । उप नो हरिभिः सुतम् ॥ द्विता यो वृत्रहन्तमो विद इ-
न्द्रः शतक्रतुः । उप नो हरिभिः सुतम् ॥ त्वं हि वृत्रहन्नेषां पाता सोमानामसि ।
उप नो हरिभिः सुतम् ॥ १० ॥ प्र वो महे महेवृधे भरध्वं प्रचेतसे प्रसुमतिं कृ-
णुध्वम् । विशः पूर्वीः प्रचरचर्षणि प्राः ॥ उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म
जनयन्त विप्राः । तस्य व्रतानि न मिनन्ति धीराः ॥ इन्द्रं वाणीरनुत्तमन्युमेव स-
त्रा राजानं दधिरे सहध्यै । हर्यश्वाय बर्हया समापीन् ॥ ११ ॥ यदिन्द्र यावत-

त्वमेतावदहमीशीय । स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ शि-
क्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे । न हि त्वदन्यन्मघवन्न आप्यं व-
स्यो अस्ति पिता च न ॥ १२ ॥ श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो
मनीषाम् । कृष्वा दुवांस्यन्तमा सचेमा ॥ न ते गिरो अपिमृष्ये तुरस्य न सुष्टु-
तिमसुर्यस्य विद्वान् । सदा ते नाम स्वयशो विवक्मि ॥ भूरि हि ते सवना मा-
नुषेषु भूरि मनीषी हवते त्वामित् । मारे अस्मन्मघवं ज्योकः ॥ १३ ॥ प्रोष्वस्मै
पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा । अस्माकं
बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ त्वं सिंधूँरवासृजोऽध-
राचो अहन्नहिम् । अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् । तं त्वा परिष्वजा-
महे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ वि षु विश्वा अरातयोऽर्यो नशन्त नो
धियः । अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति । या ते रातिर्ददिर्वसु नभ-
न्तामन्यकेषां ज्याका अधि धन्वसु ॥ १४ ॥ रेवां इद्रेवतस्तोता स्यात्त्वावतो म-
घोनः । प्रेदु हरिवः सुतस्य ॥ उक्थं च न शस्यमानं नागो रयिरा चिकेत । न
गायत्रं गीयमानम् ॥ मा न इन्द्र पीयत्नवे मा शर्द्धते परादाः । शिक्षा शचीवः
शचीभिः ॥ १५ ॥ एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् । दिवो अमुष्य
शासतो दिवं यय दिवावसो ॥ अत्रा वि नेमिरेषामुरां न धूनुते वृकः । दिवो अमुष्य
शासतो दिवं यय दिवावसो ॥ आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १६ ॥ पवस्व सोम मन्दयन्नि-
न्द्राय मधुमत्तमः ॥ ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥ असृग्रं देववीतये
वाजयन्तो रथा इव ॥ १७ ॥ अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं सहसो
जातवेदसं विप्रन्न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य
विभ्राष्टिमनुशुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ यजिष्ठं त्वा यजमाना हुवेम ज्ये-
ष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः । परिज्मानमिव द्यां होतारं
चर्षणीनाम् । शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ स हि

पुरूचिद्दोजसा विरुक्मता दीद्यानो भवति द्रुहन्तरः परशुर्न द्रुहन्तरः । वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् । निष्षहमाणो यमते नायते धन्वासहा नायते ॥ १८ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः–१ अग्निः पावकः । २ सोभरिः काण्वः । ५, ६ अवत्सारः काश्यप अन्ये च ऋषयो दृष्टलिङ्गाः । ८ वत्सप्री । ९ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ । १० त्रिशिरास्त्वाष्ट्रः सिंधुद्वीपो वांबरीषः । ११ उलो वातायनः । १३ वेनः । ३, ४, ७, १२ इतिसाम ॥ देवता–१, २, ८ अग्निः । ५, ६ विश्वे देवाः । ९ इन्द्रः । १० आपः । ११ वायुः । १३ वेनः । ३, ४, ७, १२ इतिसाम ॥ छन्दः—१ विष्टारपाङ्क्तिः प्रथमस्य, सतोबृहती उत्तरेषां त्रयाणां, उपरिष्टाज्ज्योतिः अत उत्तरस्य, त्रिष्टुप् चरमस्य । २ प्रागाथं काकुभं । ५, ६, १३ त्रिष्टुप् । ८–११ गायत्री । ३, ४, ७, १२ इतिसाम ॥ स्वरः–१ पञ्चमः प्रथमस्य, मध्यमः उत्तरेषां त्रयाणां, धैवतः चरमस्य । २ मध्यमः । ५, ६, १३ धैवतः । ८–११ षड्जः । ३, ४, ७, १२ इतिसाम ॥

अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो । बृहद्भानो शवसा वाजमुक्थ्यांऽदधासि दाशुषे कवे ॥ पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना । पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः । त्वे इषः सन्दधुर्भूरि वर्पसश्चित्रोतयो वामजाताः ॥ इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य । स दर्शतस्य वपुषो विराजसि पृणक्षि दर्शतं क्रतुम् ॥ इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः । रातिं वामस्य सुभगां महीमिषं दधासि सानसिं रयिम् ॥ ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः । श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ १ ॥ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्म

भिः । यस्य त्वं सख्यमाविथ ॥ तव द्रप्सो निलवान्वाश ऋत्विय इन्धानः सि-
ष्णवाददे । त्वं महीनामुषसामसि प्रियः क्षपोवस्तुषु राजसि ॥ २ ॥ तमोषधीर्द-
धिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः । तमित्समानं वनिनश्च वीरु-
धोन्तर्वतीश्च सुवते च विश्वहा ॥ ३ ॥ अग्निरिन्द्राय पवते दिवि शुक्रो विरा-
जति । महिषीव विजायते ॥ ४ ॥ यो जागार तमृचः कामयन्ते यो जागार तमु
सामानि यन्ति । यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ ५ ॥
अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागारतमुसामानि यन्ति । अग्निर्जागार तमयं
सोम आह तवाहमस्मिसख्ये न्योकाः ॥ ६ ॥ नमः सखिभ्यः पूर्वसद्भ्योनमः
साकं निषेभ्यः । युञ्जे वाचं शतपदीम् ॥ युञ्जे वाचं शत पदीं गाये सहस्रव-
र्तनि । गायत्रं त्रैष्टुभंजगत् ॥ गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता । देवा
ओकांसि चक्रिरे ॥७॥ अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रोज्योतिर्ज्योतिरिन्द्रः । सूर्यो-
ज्योतिर्ज्योतिः सूर्यः ॥ पुनरूर्जानि वर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः ॥
सह रय्यानि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ ८ ॥
यदिन्द्राहं यथा त्वमीशीयवस्व एक इत् । स्तोता मे गोसखा स्यात् ॥ शि-
क्षेयमस्मै दित्सेयं शचीपते मनीषिणे । यदहं गोपतिः स्याम् ॥ धेनुष्ट इन्द्र
सूनृता यजमानाय सुन्वते । गामश्वं पिप्युषी दुहे ॥ ९ ॥ आपो हिष्ठा म-
योभुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे ॥ यो वः शिवतमो रस-
स्तस्य भाजयतेह नः । उशतीरिवमातरः ॥ तस्मा अरङ्गमाम वो यस्य
क्षयाय जिन्वथ । आपो जनयथा च नः ॥ १० ॥ वात आवातु भेषजं शम्भु म-
योभु नो हृदे । प्र न आयुंषि तारिषत् ॥ उत वात पितासि न उत भ्रातोतनः
सखा । स नो जीवातवे कृधि ॥ यददो वात ते गृहे३ऽमृतन्निहितं गुहा । तस्य नो
धेहि जीवसे ॥११॥ अभि वाजी विश्वरूपो जनित्रं हिरण्ययं बिभ्रदत्कं सुपर्णः ।
सूर्यस्य भानुमृतुथावसानः परिस्वयं मेधमृज्रो जजान ॥ अप्सु रेतः शिश्रिये वि-
श्वरूपं तेजः पृथिव्यामधि यत्सम्बभूव । अन्तरिक्षे स्वमहिमानं मिमानः कनिक्र-

न्ति वृष्णो अश्वस्य रेतः ॥ अयं सहस्रा परियुक्तावसानः सूर्यस्य भानुं यज्ञो दाधार । सहस्रदाः शतदा भूरिदावा धर्ता दिवो भुवनस्य विश्पतिः ॥ १२ ॥ नाके सुपर्णमुपयत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि । वसानो अत्कं सुरभिन्दृशेकं स्वा३र्ण नाम जनत प्रियाणि ॥ द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् । भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ १३ ॥

इति द्वितीयोऽर्धः प्रपाठकः

ऋषिः—१—४ अप्रतिरथ ऐन्द्रः । ५ अप्रतिरथ ऐन्द्रः प्रथमयोः, पायुर्भारद्वाजः चरमस्य । ६ पायुर्भारद्वाजः चरमस्य । ७ शासो भारद्वाजः प्रथमयोः । ८ पायुर्भारद्वाजः प्रथमस्य, तृतीयस्य च । ९ जय ऐन्द्रः प्रथमस्य, गोतमो राहूगणः उत्तरयोः ॥ देवता—१, ३, ४ इन्द्रः । २ बृहस्पतिः प्रथमस्य, इन्द्रः उत्तरयोः । ५ अप्वा प्रथमस्य, इन्द्रो मरुतो वा द्वितीयस्य, इषवः चरमस्य । ६, ८ लिंगोक्ता संग्रामाशिषः । ७ इन्द्रः प्रथमयोः । ९ इन्द्रः प्रथमस्य, विश्वेदेवा उत्तरयोः ॥ छन्दः—१—४, ९ त्रिष्टुप् । ५, ८ त्रिष्टुप् प्रथमस्य, अनुष्टुबुत्तरयोः । ६, ७ पङ्क्तिः चरमस्य, अनुष्टुप् द्वयोः ॥ स्वरः—१—४, ९ धैवतः । ५, ८ धैवतः प्रथमस्य, गान्धार उत्तरयोः । ६, ७ पञ्चमः चरमस्य, गान्धारः द्वयोः ॥

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन । संसृष्टजित्सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिरस्ता ॥ १ ॥ बृहस्पते परिदीया रथेन रक्षोहामित्राँ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।

अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ गोत्रभिदं गोविदं
वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमं सजाता अनुवीरयध्वमिन्द्रं सखायो
अनुसं रभध्वम् ॥ २ ॥ अभिगोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्यु रि-
न्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽ३ऽस्माकं सेना अवतु प्रयुत्सु ॥ इन्द्र आसान्ने
ता बृहस्पतिर्द क्षिणायज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां
मरुतो यन्त्वग्रम् ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्द्ध उग्र-
म् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ३ ॥ उद्धर्षय म-
घवन्नायुधान्यु त्सत्वनां मामकानां मनांसि । उद्वृत्रहन्वाजिनां वाजिनान्यु द्रथानां
जयतां यन्तु घोषाः ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मां उ देवा अवता हवेषु ॥ असौ या सेना मरुतः
परेषामभ्येति न ओजसा स्पर्द्धमाना । तां गूहत तमसा पत्रतेन यथैतेषामन्यो अ-
न्यं न जानात् ॥ ४ ॥ अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभिप्रेहि निर्दह हृत्सु शोकैरन्धे नामित्रास्तमसा सचन्तम् ॥ प्रेता जयता नर
इन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवो नाधृष्या यथा सथ ॥ अवसृष्टा
परा पत शरव्ये ब्रह्म संशिते । गच्छामित्रान्प्रपद्यस्व मामीषां कं च नोच्छिषः
॥ ५ ॥ कङ्काः सुपर्णा अनुयन्त्वे नान् गृध्राणामन्नमसावस्तु सेना । मैषां मो-
च्यघहारश्च नेन्द्र वयां स्येनाननुसंयन्तु सर्वान् ॥ अमित्रसेनां मघवन्नस्माञ्छत्रुय-
तीमभि । उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥ यत्र बाणाः सम्पतन्ति कुमा-
रा विशिखा इव । तत्र नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु । विश्वाहा शर्मयच्छ-
तु ॥ ६ ॥ विरक्षो विमृधो जहि विवृत्रस्य हनू रुज । विमन्यु मिन्द्र वृत्रहन्नमित्र-
स्याभिदासतः ॥ वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्मां अभि-
दासत्यधरं गमया तमः ॥ इन्द्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ ।
तौ युञ्जीत प्रथमौ योग आगते याभ्यां जितमसुराणां सहो महत् ॥ ७ ॥ मर्मा-
णि ते वर्मणाच्छादयामि सोमस्त्वा राजामृतेनानुवस्ताम् । उरोर्वरीयो वरुणस्ते

कृणोतु जयन्तं त्वानुदेवा मदन्तु ॥ अन्धा अमित्रा भवताशीर्षाणोऽहय इव । तेषांवो अग्निनुन्नानामिन्द्रो हन्तु वरंवरम् ॥ यो नः स्वोऽरणो यश्च निष्ट्यो जिघांसति । देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरं शर्म्मवर्म्म ममान्तरम् ॥ ८ ॥
मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकं संशाय पविमिन्द्र तिग्मं विशत्रून्ताढि विमृधो नुदस्व ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांस सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥ ९ ॥

इति तृतीयोऽर्धः प्रपाठकः नवमश्च

प्रपाठकः समाप्तः

इत्युत्तरार्चिकः

सामवेद संहिता समाप्ता.

# सामवेदसंहितायाः ॥

## मन्त्राणां

## वर्णानुक्रमसूची

अजमेरस्थ वैदिक यन्त्रालये

मुद्रिता

द्वितीयावृत्ति,

मुद्रणसङ्ख्याः १९७२०४९०११

संवत् १९६७ वि०

ओ३म्

# सामवेदसंहितायाः

## मन्त्राणां वर्णानुक्रमसूची

# अ

# आ

# इ

# ई

# उ

# ऊ



# ऋ

# ए

# ऐ



# ओ

# औ



# क

# ग



# घ



# च

# ज



# त

# द

# प

| पृष्ठांक. | | प्र. | अर्ध. |
|---|---|---|---|
| ११५ पवस्वसामपन्द | उ | ९ | १ |
| ५६ पवस्वेन्दोवृषा | उ | २ | १ |
| ३५ पवस्वेन्दोवृषा | पू | ५ | २ |
| ६१ पवित्रंते | उ | २ | २ |
| ४१ पवित्रंतेवितत | पू | ६ | २ |
| ७१ पवीतारःपुनी | उ | ४ | १ |
| १०६ पाताष्टत्रहा | उ | ८ | २ |
| ४५ पात्यग्निर्विपा | पू | ६ | ३ |
| ६७ पातंनोमित्रा | उ | ३ | २ |
| ११ पान्तमावोअन्धस | पू | २ | २ |
| ५२ पान्तमावो | उ | १ | २ |
| ११६ पावकवर्चाः | उ | ६ | २ |
| १३ पावकानःसरस्वती | पू | २ | २ |
| ८४ पावमानीर्दधं | उ | ५ | २ |
| ८४ पावमानीर्यो | उ | ५ | २ |
| ८४ पावमानीस्वस्त्य | उ | ५ | २ |
| ८४ पावमानीःस्व | उ | ५ | २ |
| २० पाहिगाअन्धसो | पू | ३ | २ |
| ३ पाहिनोअग्नएकया | पू | १ | १ |
| ९६ पाहिनोअग्न | उ | ७ | २ |
| ९९ पाहिविश्वास्मात् | उ | ७ | २ |
| ११४ पिबन्तिमित्रो | उ | ९ | १ |
| ९० पिबात्वा३स्य | उ | ६ | २ |
| १६ पिबासुतस्यरसि | पू | ३ | १ |
| ९१ पिबासुतस्य | उ | ६ | २ |
| २९ पिबाससोममिन्द्र | पू | ५ | १ |
| ६४ पिबासोम | उ | ३ | १ |
| ११७ पुनरूर्जानि | उ | ९ | २ |
| ७६ पुनातादक्षसा | उ | ४ | २ |
| ७८ पुनानासश्च | उ | ५ | १ |
| १०२ पुनानेतन्वा | उ | ७ | ३ |
| ६४ पुनानोअक्रमीदभि | उ | ३ | १ |
| ३६ पुनानोअक्रमीत् | पू | ६ | १ |
| ५९ पुनानोदेववीत | उ | २ | २ |
| ५६ पुनानोवरिवः | उ | २ | २ |
| ७२ पुनानोवारे | उ | ४ | १ |
| ७८ पुनानःकलशे | उ | ५ | १ |
| ३७ पुनानःसोमजा | पू | ६ | १ |
| ३७ पुनानःसोमधा | पू | ६ | १ |
| ५० पुनानःसोम | उ | १ | १ |
| ८१ पुरांभिदुर्युवा | उ | ५ | १ |
| २६ पुरांभिदुर्युवाकवि | पू | ४ | २ |
| ७६ पुरुत्राहिस | उ | ४ | २ |
| ८ पुरुत्वादाशिवां | पू | २ | १ |
| ४५ पुरुषएवेदंसर्वं | पू | ६ | ३ |
| ५२ पुरुहूतंपुरुष्टुतं | उ | १ | १ |
| ५३ पुरुतमंपुरू | उ | १ | २ |
| ६७ पुरूरुणाचिध्य | उ | ३ | २ |
| ५१ पुरोजितीवो | उ | १ | १ |
| ४० पुरोजितीवोअन्ध | पू | ६ | २ |
| ७६ पुरःसद्यइत्था | उ | ५ | १ |
| ४८ पूर्वस्थयत्ते | महा० | | १ |
| ५८ पूर्वीरिन्द्रस्य | उ | २ | १ |
| १०१ पौरोअश्वस्य | उ | ७ | ३ |
| ६६ प्रकाविर्देव | उ | ३ | २ |
| ७४ प्रकाव्यमुशनेव | उ | ४ | २ |
| ३८ प्रकाव्यमुशने | पू | ६ | १ |
| ५ प्रकेतुनाबृहता | पू | १ | २ |

## ब

# य

# श

# स

| पृष्ठांक. | | प्र. | अर्ध. |
|---|---|---|---|
| ६६ साह्वान्विश्वाअभि | उ | ७ | २ |
| १०२ सिञ्चन्तिनमसा | उ | ७ | ३ |
| ३० सीदन्तस्तेवयो | पू | ५ | १ |
| ६३ सुतएतिपवित्र | उ | ३ | १ |
| ५४ सुताइन्द्राय | उ | १ | २ |
| ४० सुतासोमधुमत्तमाः | पू | ६ | २ |
| ६१ सुतासोमधु | उ | २ | २ |
| १४ सुनीथोघासमर्त्यो | पू | ३ | १ |
| १६ सुनोतसोमपा | पू | ३ | २ |
| ८७ सुप्रावीरस्तु | उ | ६ | १ |
| १०६ सुमन्मावस्वी | उ | ८ | १ |
| ७२ सुरूपकृत्नुं | उ | ४ | १ |
| ११ सुरूपकृत्नुमूतये | पू | २ | २ |
| ६३ सुवितस्य | उ | ३ | १ |
| ८७ सुषमिद्धोनआ | उ | ६ | १ |
| ११३ सुषहासोम | उ | ९ | १ |
| ७३ सुष्वाणासो | उ | ४ | १ |
| २२ सुष्वाणासइन्द्र | पू | ४ | १ |
| ८८ सूर्यस्येवरश्मयो | उ | ६ | १ |
| ११० सोअग्निर्योवसुः | उ | ८ | ३ |
| ६७ सोअर्षेन्द्राय | उ | ३ | २ |
| ३७ सोमउष्वाणःसोतृ | पू | ६ | १ |
| ६७ सोमउष्वाणः | उ | ३ | २ |
| ७९ सोमाअसृग्रं | उ | ५ | १ |
| ९३ सोमानांस्वर | उ | ६ | ३ |
| १० सोमानांस्वरणं | पू | २ | १ |
| ४० सोमाःपवन्तइन्द | पू | ६ | २ |
| ७३ सोमाःपवन्त | उ | ४ | १ |
| ६० सोमगावो | उ | २ | २ |
| ७ सोमंराजानं | पू | १ | २ |
| ६५ सोमःपवतेजनि | उ | ३ | १ |
| ३८ सोमःपवते | पू | ६ | १ |
| ४२ सोमःपुनानऊर्मि | पू | ६ | २ |
| ६४ सोमःपुनान | उ | ३ | १ |
| ७९ सोमःपुनानो | उ | ५ | १ |
| ११ सोमःपूषाचचेततु | पू | २ | २ |
| ११८ संक्रन्दनेन | उ | ९ | ३ |
| ४४ संतेपयांसि | पू | ६ | ३ |
| ६४ संदेवैःशोभते | उ | ३ | १ |
| ९१ संमातृभिर्न | उ | ६ | २ |
| ५८ संमिश्लोअरु | उ | २ | १ |
| ७३ संवत्सइवमा | उ | ४ | १ |
| ५६ संवृक्तधृष्णुं | उ | २ | २ |
| ६० स्वरन्तित्वा | उ | २ | २ |
| १२० स्वस्तिनइन्द्रो | उ | ९ | ३ |
| ३४ स्वादिष्ठया | पू | ५ | २ |
| ५१ स्वादिष्ठया | उ | १ | १ |
| ३० स्वादोरित्थाविषू | पू | ५ | १ |
| ६८ स्वादोरित्था | उ | ३ | २ |
| ५० स्वायुधःपवते | उ | १ | १ |
| १०२ स्तोत्रंराधानां | उ | ७ | ३ |

## ह

| | | | |
|---|---|---|---|
| ६० हथोवृत्राण्या | उ | २ | २ |
| ४५ हरीतइन्द्र | पू | ६ | ३ |

॥ इति ॥



# वैदिक पुस्तकालय अजमेर की विक्रय पुस्तकों का सूचीपत्र व

# बेचने के संक्षिप्त नियम ॥



(१) सब पुस्तकें रोक दाम पेशगी भेजने पर या वी. पी. द्वारा भेजी जावेंगी (२) मूलवेदों पर (जिल्द की कीमत व सुनहरी वेदों को छोड़) २ से ५ पर २०) २१ पर २२) और १००) पर ३०) सैकड़ा और शेष सब पुस्तकों पर १०) रुपये वा इस से अधिक के पुस्तक मंगवानेवालों को २०) सैकड़े के हिसाब से कमीशन दिया जायगा अर्थात् ८) में १०) की पुस्तकें, १००) रोक भेजने पर १२२) की पुस्तकें भेजी जावेंगी (३) महसूल सब पुस्तकों का अलग लिया जावेगा (४) बिके हुए पुस्तक वापिस न लिये जावेंगे (५) मूल्य आदि भेजने तथा बड़ा सूचीपत्र मंगवाने के लिये नीचे लिखे पते से पत्र व्यवहार करें ॥

| | मूल्य. | डा. |
|---|---|---|
| ऋग्वेदभाष्य पहले मंडल से सातवें मंडल के पांचवें अष्टकके पांचवें अध्याय से तीसरे वर्ग के दूसरे मंत्र तक कीमत | १०) | |
| कमीशन २०) सैकड़ा दिया जावेगा | | |
| नोट—फुटकर अंक नहीं बेचे जावेंगे | | |
| ऋग्वेद का आगे का शेष मूल भाग | १) | |
| ऋग्वेदभाष्य का नमूना | )॥ | )॥ |

| | मूल्य | डा. |
|---|---|---|
| यजुर्वेदभाष्य सम्पूर्ण | १०) | |
| कमीशन २०) सैकड़े से दिया जावेगा | | |
| **नोट—फुटकर नहीं बेचे जावेंगे** | | |
| **चारों मूलवेदः—** | | |
| बढ़िया कागज पर स्वर्णाक्षरों में | ८) | |
| बढ़िया कागज पर बिना जिल्द | ५॥) | |
| साधारण कागज पर बिना जिल्द | ५) | |
| बढ़िया जिल्द के २) अलग | | |
| चारोंवेदों की अनुक्रमणिका | १॥) | =)॥ |
| शतपथ ब्राह्मण सम्पूर्ण | ४) | ।) |
| ऋग्वेदादिभाष्य भूमिका | १।) | ≡) |

| | मूल्य. | डा. |
|---|---|---|
| ऋग्वेदादिभाष्य भूमिका सजिल्द | १।।।) | ।) |
| वेदाङ्गप्रकाश सम्पूर्ण(१४भाग) | ४।≡) | ।।। ।≡।। |

वेदाङ्गप्रकाश का ब्यौरा:—

| | | |
|---|---|---|
| वर्णोच्चारण शिक्षा | )।।। | )।। |
| सन्धिविषय | ।-) | )।। |
| नामिक | ।) | )।। |
| कारकीय | ≡) | ।। |
| सामासिक | ।) | )।। |
| स्त्रैणताद्धित | ।।≡) | -) |
| अव्ययार्थ | -)।। | )।। |
| सौवर | -)।। | )।। |
| आख्यातिक | १।) | =) |
| पारिभाषिक | ≡) | )।। |
| धातुपाठ | ।) | )।। |
| गणपाठ | ≡) | )।। |
| उणादिकोष | ।।) | -) |
| निघण्टु | ।) | )।। |
| निरुक्त | ।।≡) | -)।। |
| अष्टाध्यायीमूल | ≡)।। | )।। |
| संस्कृतवाक्यप्रबोध | =) | )।। |
| व्यवहारभानु | =) | )।। |
| हवनमन्त्र | )। | )।। |
| भ्रमोच्छेदन | )।।। | )।। |
| अनुभ्रमोच्छेदन | )।।। | )।। |
| शास्त्रार्थ मेला चांदापुर नागरी | -) | )।। |
| शास्त्रार्थ मेला चांदापुर उर्दू | -) | )।। |
| शास्त्रार्थ काशी | )।।। | )।। |
| शास्त्रार्थ फीरोज़ाबाद | -)।। | )।। |
| वेदविरुद्धमतखण्डन | =) | ।। |

| | मूल्य. | डा. |
|---|---|---|
| वेदान्तिध्वान्तनिवारण नागरी | )।।। | )।। |
| वेदान्तिध्वान्तनिवारण अङ्गरेज़ी | -) | )।। |
| आर्य्योद्देश्यरत्नमाला नागरी | )। | )।। |
| आर्य्योद्देश्यरत्नमाला मरहटी | -) | )।। |
| गोकरुणानिधि | -) | )।। |
| स्वामी नारायणमतखं० संस्कृत गुज. | -)।। | )।। |
| स्वामी नारायणमतखं० सं० नागरी | -)।। | )।। |
| स्वमन्तव्यामन्तव्यप्रकाश नागरी | )।। | )।। |
| स्वमन्तव्यामन्तव्यप्रकाश अङ्गरेज़ी | )। | )।। |
| आर्य्याभिविनय गुटका | ≡) | )।। |
| आर्य्याभिविनय सजिल्द | ।-) | -) |
| आर्य्याभिविनय मोटे अक्षरों की | ।=) | =) |
| भ्रान्तिनिवारण | -) | )।। |
| पञ्चमहायज्ञविधि | -)।। | )।। |
| पञ्चमहायज्ञविधि साधारण जिल्द | ≡)।। | )।। |
| पञ्चमहायज्ञविधि बढ़िया | =) | )।। |
| आर्य्यसमाज के नियमोपनियम | )। | )।। |
| सत्यार्थप्रकाश साधा० कागज़ नागरी | १) | ।) |
| सत्यार्थप्रकाश साधा० सजिल्द ,, | १।।) | ।-) |
| सत्यार्थप्रकाश बढ़िया ,, | १।।।) | ।-) |
| सत्यार्थप्रकाश बढ़िया सजिल्द ,, | २।) | ।=) |
| सत्यार्थप्रकाश बङ्गभाषा में | १) | |
| संस्कारविधि | ।।) | =) |
| संस्कारविधि सजिल्द | १) | ≡) |
| स्वीकारपत्र | )। | )।। |

आर्य्यसमाज के नियम नागरी में एक प्रकार की स्याही में =)।। सैकड़ा, रङ्ग बिरङ्गी स्याही में तथा सुनहरी २) सैकड़ा, अङ्गरेज़ी में सफ़ेद कागज़ पर ।) सैकड़ा ॥

प्रबन्धकर्त्ता वैदिक पुस्तकालय—अजमेर